व्यावहारिकदृशैव केवलं कर्तृ कर्म च विभिन्नमिष्यते ।
निश्चयेन यदि वस्तु चिंत्यते कर्तृ कर्म च सदैकमिष्यते ॥ १८ ॥

सं० टी०—च पुनः कर्तृ कारकं, कर्म च-कार्यं, विभिन्नं परस्परं भिन्नं, इष्यते, कया ? केवलं-पर व्यावहारिकदृशैव-व्यवहारदृष्ट्यैव यथा सुवर्णकारादिः कुंडलादिपरद्रव्यपरिणामात्मकं कर्म करोति तत्फलं च भुंक्ते न तु तन्मयो भवति तथात्मापि पुण्यपापादिकं पुद्गलात्मक कर्म करोति, तत्फलकुलं च कवलयति न तु तन्मयः मीमास्यते। यदि-चेत्, निश्चयेन-निश्चयनयेन वस्तु-द्रव्यमात्रं केवलं, इष्यते तदा सदा-नित्यं, कर्तृ कर्म च आत्मनः कर्तृत्वकर्मत्वयोरैक्यमिष्यते यथा च स नार्डिधमादि चिकीर्षुः, चेष्टारूपमात्मपरिणामात्मकं कर्म करोति आत्मपरिणामात्मकं दुःखलक्षणं चेष्टारूपं कर्मफलं भुंक्ते ततोऽनन्यत्वे सति तन्मयश्च भवति तथात्मापि चिकीर्षुश्चेष्टारूपं स्वपरिणामात्मकं कर्म करोति चेष्टारूपमात्मपरिणामात्मकं दुःखलक्षणं फलं च भुंक्ते ततोऽनन्यत्वे सति तन्मयश्चैव स्यात् ॥ १८ ॥ अथ वस्त्वंतरप्रवेशं वस्तुनो न निर्लुठति पद्यत्रयेण—

अर्थ—व्यवहारकी दृष्टीमैं तो केवल कर्ता अर कर्म भिन्न दिखै हैं अर जब निश्चयकरि देखिये वस्तूकूं विचारिये तब कर्ता अर कर्म सदाकाल एकही देखिये है ॥ भावार्थ—व्यवहारनय तो पर्यायाश्रित है सो यामें तो भेदही दीखै ॥ बहुरि शुद्ध निश्चयनय है द्रव्याश्रित है तामें अभेदही दीखे तातै व्यवहारमें तो कर्ता कर्मका भेद है निश्चयमें अभेद है ॥

ननु परिणाम एव किल कर्म विनिश्चयतः स भवति नापरस्य परिणामिन एव भवेत् ।
न भवति कर्तृशून्यमिह कर्म न चैकतया स्थितिरिह वस्तुनो भवतु कर्तृ तदेव ततः ॥⊛॥

अर्थ—ननु कहिये अहो मुनि हो, तुम यह निश्चय करो, जो यह प्रगटपणै परिणाम है, सो तौ निश्चयतैं कर्म है । बहुरि सो परिणाम अपना आश्रय जो परिणामी द्रव्य, ताहीका होय है, अन्यका नाही होय है। जातैं परिणाम हैं ते अपने अपने द्रव्यके आश्रय हैं, अन्यके परिणामका अन्य आश्रय होय नाही ॥ बहुरि जो कर्म है, सो कर्ताविना होय नाही । बहुरि वस्तु है सो द्रव्यपर्यायस्वरूप है । तातै ताकी एक अवस्थारूप कूटस्थस्थिति आदि होय नाही, सर्वथा नित्यपणा बाधासहित है । तातैं अपना परिणामरूप कर्मका आपही कर्ता है, यह निश्चयसिद्धांत है ॥ अब इसही अर्थके समर्थनरूपकलश काव्य कहै हैं–

विशेष–इसश्लोककी सस्कृतटीका उपलब्ध न हुई ॥ ⊛ ॥

वहिर्लुठति यद्यपि स्फुटदनंतशक्तिः स्वयं तथाप्यपरवस्तुनो विशति नान्यवस्त्वंतरं ।
स्वभावनियतं यतः सकलमेव वस्त्विष्यते स्वभावचलनाकुलः किमिह मोहितः क्लिश्यते ॥ १९ ॥

सं० टी—यद्यपि स्वय-स्वभावतः, वहिः-बाह्ये, स्फुटेत्यादिः-स्फुटंती-व्यक्ता चासावनंतशक्तिः छिकवारानंतविभागप्रति-च्छेदश्च लुठति-स्फुटीभवति, यथा सेटिकाया. सेटिकत्वादिः तथापि अन्यवस्त्वंतर सेटिकादि परवस्तुनो मध्ये न विशति-कुड्यादिलक्षणस्य मध्ये न प्रविशति यत. यस्मात् कारणात्, सकलमेव-समस्तमेव वस्तु-चेतनलक्षणं द्रव्यं स्वभावनियतं-स्वस्य भावे स्वस्वरूपे, नियतं स्थितं जीवस्य ज्ञानात्मकं लक्षणं, अजीवस्य अचेतनस्य अचैतन्यं तद्विपरीतं इष्यते-अभिलष्यते अत इह-जगति, मोहितः-मोहाक्रांतः पुमान्, कि क्लिश्यते किं वृथा क्लेशं करोति पराभिप्रायपरिवर्तनेन, किंभूतः सन् ? स्वेत्यादिः-स्व-भावस्य-वस्तुस्वरूपस्य, चलना-चापल्यं कर्तरि कर्मप्रवेशत्वं कर्मणि कर्तृप्रवेश वमित्यादिलक्षणं तत्राकुलः-व्याकुलतां गतः सन्, स्वरूपस्य ज्ञानादेः स्वरूपिणि जीवादौ व्यवस्थितत्वात् अन्यथा द्रव्योच्छेदः स्यात् ॥ १९ ॥

अर्थ—यद्यपि वस्तु है सो आप प्रकाशरूप अनंतशक्तिस्वरूप है, तथापि अन्यवस्तु है, सो अन्यवस्तुनिविषै प्रवेश नाही करे है, बाहरिही लोटै है । जातै समस्तही वस्तु अपने अपने स्वभावविषैं नियमरूप हैं ऐसैं मानिये है ॥ सो आचार्य कहै हैं--जो, ऐसै होतैभी यह जीव अपने स्वभावतैं चलायमान होय, आकुल हुवा मोही भया संता, क्यौं क्लेशरूप होग है ? ॥ भावार्थ—वस्तुस्वभाव तौ नियमरूप ऐसा है, जो, काहू वस्तूने कोई मिलै नाही अर यह प्राणी अपने स्वभावसूं चलायमान होय व्याकुल-क्लेशरूप होय है, सो यह बडा अज्ञान है ॥ फेरि इसही अर्थकूं दृढ करनेकूं कहै हैं—

वस्तु चैकमिह नान्यवस्तुनो येन तेन खलु वस्तु वस्तु तत् ।
निश्चयोयमपरोऽपरस्य कः किं करोति हि वहिर्लुठन्नपि ॥ २० ॥

सं० टी०-इह जगति, येन- कारणेन, एकं-चेतनादिलक्षणं, वस्तु-द्रव्यं, अन्यवस्तुन'- अपरवस्तुनः- चेतनादेः, स्वरूपं न भवति खल्विति निश्चितं, तेन वस्तुन.- परवस्तुस्वभावाभावेन कारणेन, अयं-प्रसिद्धः, निश्चयः-परमार्थः, अयं कः ? यद्वस्तु स्वगुणपर्यायैर्द्रव्यं तत्स्वगुणपर्यायैरेव वस्तु चेतनादि द्रव्यं नान्यथा परस्वरूपेण वस्तु भवत्यतिप्रसंगात् हीति-तस्मात् कारणात् कः-अपरः, अन्यः पदार्थः सेटकादिर्जीवादिश्च अपरस्य कुड्यादेः कर्मपुद्गलस्य च, किं श्वेतत्वं ज्ञानित्वं च करोति अपि तु

न करोतीत्यर्थः वहिः-वाह्ये, लुठन्नपि भित्यादीनां श्वेतत्वं कुर्वन्नपि परस्वरूपेण न भवति अन्यथा स्वद्रव्योच्छेदः, आत्मापि परद्रव्यस्य ज्ञेयस्य ज्ञायक वहिर्भवन्नपि तत्स्वरूपेण न भवति ॥ २० ॥

अर्थ—जातैं या लोकविषैं एक वस्तु है सो अन्यवस्तुका नाही है, तिसही कारणकरि वस्तु है सो वस्तु है, ऐसैं न होय तौ वस्तुका वस्तुपणा न ठहरै, निश्चय है। ऐसैं होतै अन्यवस्तुके बाहिर लोटै है, तौऊ ताका कहा करै? किछु भी न करिसकै है ॥ भावार्थ—वस्तुका स्वभाव तौ ऐसा है, जो अन्य कोई वस्तु पलटाय न सकै, तब अन्यकै अन्य कहा किया? किछूभी न किया ॥ जैसैं चेतनवस्तुकै एकक्षेत्रावगाहरूप पुद्गल तिष्ठै है, तौऊ चेतनका जडकरि आपरूप तौ परिणमाय सक्या नाही, तब चेतनका कहा किया? किछू भी न किया' यह निश्चयनयका मत है ॥ बहुरि निमित्तनैमित्तिकभावकरि अन्यवस्तुकै परिणाम होय है, सो भी तिस वस्तुहीका है, अन्यका कहना व्यवहार है, सोही कहै हैं—

यत्तु वस्तु कुरुतेऽन्यवस्तुनः किंचनापि परिणामिनः स्वयं।
व्यावहारिकदृशैव तन्मतं नान्यदस्ति किमपीह निश्चयात् ॥ २१ ॥

सं० टी०—यत्तु तत् मतं-कथितं कया व्यावहारिकदृशैव-व्यवहारदृष्ट्यैव न तु परमार्थतः, तत् किं? तु विशेषे यद्वस्तु सेटिकादिः, परिणामिनः-परिणमनशीलस्य, अन्यवस्तुनः कुड्यादेः स्वयं स्वभावतः किंचन धवलत्वादिकं कुरुते विदधाति, तथात्मापि परद्रव्यं-स्वकेन भावेन ज्ञातापि, जानाति पश्यति विजहाति श्रद्धत्ते चैतत्सर्वं व्यवहारतः इह-जगति, निश्चयात्-परमार्थतः, किमपि सेटिकादि द्रव्यं चेतनद्रव्यं वा अन्यत् कुड्यादेः श्वेतकत्वं, आत्मनः परद्रव्यज्ञातृत्वं च नास्ति ॥ २१ ॥

अथ द्रव्ये द्रव्यांतरनिषेधं निधत्ते—

अर्थ—जो कोई वस्तु अन्यवस्तूकै किछू करै है ऐसा कहिये है सो वस्तु आप परिणामी है, अवस्थातैं अन्य अवस्थारूप होना वस्तूका पर्यायस्वभाव है, याहीतैं परिणामी कहिये है। सो ऐसै परिणामी वस्तूकै अन्यके निमित्ततैं परिणाम भया ताकूं कहै, यह अन्यने कीया सो यह व्यवहारनयकी दृष्टिकरि कहिये है ॥ बहुरि निश्चयतै तौ अन्य किछू किया है नाही, परिणाम भया सो आपहीका भया, अन्यने तौ तामैं किछूभी ल्याय धरया नाही ऐसैं जानना ॥

शुद्धद्रव्यनिरूपणार्पितमतेस्तत्त्वं समुत्पश्यतो
नैकद्रव्यगतं चकास्ति किमपि द्रव्यांतरं जातुचित्।

ज्ञानं ज्ञेयमवैति यत्तु तदयं शुद्धस्वभावोदयः
किं द्रव्यांतरचुंबनाकुलधियस्तत्त्वाच्च्यवंते जनाः ॥ २२ ॥

सं टी—जातुचित् कदाचित्, किमपि-चेतनमचेतनं वा द्रव्यांतरं, चेतनादचेतनं वस्त्वंतरं, अचेतनाच्चेतनं वा वस्त्वंतरं एकद्रव्यगतं-एकस्मिन् द्रव्ये चेतने चेतनं अचेतनं च अचेतने वा चेतनमचेतनं च गतं-संप्राप्तं, न चकास्ति- न द्योतते कस्य ? तत्त्वं-वस्तुयाथात्म्यं समुत्पश्यतः-अवलोकयतो मुनेः, किंभूतस्य ? शुद्धेत्यादि-शुद्धं द्रव्यं निरुपाधिस्वात्मादि द्रव्यं, तस्य निरूपणे-प्रतिपादने, अर्पिता-आरोपिता मतिः-बुद्धिः येन तस्य, तु-पुनः, यत्-यस्माद्धेतोः, ज्ञानं ज्ञेयं-पदार्थं, अवैति-जानाति न तु ज्ञेयं स्वस्वरूपेण करोति नत्विदं तत्स्वरूपेण भवति किंतु केवलं परिछिनत्ति तत् तस्मात् कारणात् अयं ज्ञेयपरिच्छेदकत्वलक्षणः शुद्धेत्यादिः-शुद्धः-कर्मोपाधिनिरपेक्षः स्वभावः-स्वरूपं, तस्य उदयः-प्राकट्यं, ततः, जनाः-जिनागमानभिज्ञाः लोकाः, तत्त्वात्-वस्तुयाथात्म्यात् किं च्यवंते-कथं चलंति, कीदृक्षाः संतः ? द्रव्यमित्यादिः-द्रव्यात् द्रव्यांतरे-परद्रव्ये, चुंबनं-आश्लेषणं तेनाकुलाः सेटिकया कथं श्वेतत्वं कुड्यादेः ज्ञानेन कथं ज्ञेयं ज्ञातमित्यादिरूपा धीः-बुद्धिः येषां ते तथोक्ताः संतः ॥ २२ ॥ अथ स्वभावस्वभाविनोर्भेदं चकास्ति—

अर्थ—आचार्य कहै हैं-जो शुद्ध द्रव्यके निरूपणविषैं लगाई है बुद्धि जानै बहुरि तत्त्वकूं अनुभवता है ऐसा पुरुषकै एक द्रव्यविषैं प्राप्त भया अन्य द्रव्य किछूभी न कदाचित् प्रतिभासै है ॥ बहुरि ज्ञान है सो अन्य ज्ञेय पदार्थकूं जानै है सो यह ज्ञानका शुद्ध स्वभावका उदय है, सो यह जन लोक है ते अन्यद्रव्यके ग्रहणविषैं आकुल है बुद्धि जिनिकी ऐसैं भये संते शुद्धस्वरूपतैं क्यों चिगैं हैं ? भावार्थ—शुद्धनयकी दृष्टिकरि वस्तुका स्वरूप विचारतैं अन्यद्रव्यका अन्यद्रव्यविषैं प्रवेश नाही दीखै है । अर ज्ञानविषैं अन्यद्रव्य प्रतिभासै है । सो यह ज्ञानकी स्वच्छताका स्वभाव है । किछु ज्ञान तिनिकूं ग्रहण न कीये है ॥ अर यह लोक अन्य द्रव्यका ज्ञानविषैं प्रतिभास देखि अर अपना ज्ञानस्वरूपतैं छूटि अर ज्ञेयके ग्रहण करनेकी बुद्धि करै है सो यह अज्ञान है ॥ ताको आचार्यने करुणाकरि कह्या है—जो ए लोक तत्त्वतैं क्यों चिगैं हैं ? फेरि उसही अर्थकूं दृढ करै हैं—

शुद्धद्रव्यस्वरसभवनात्किं स्वभावस्य शेष-
मन्यद्द्रव्यं भवति यदि वा तस्य किं स्यात्स्वभ :।

ज्योत्स्नारूपं स्नपयति भुवं नैव तस्यास्ति भूमि-
ज्ञानं ज्ञेयं कलयति सदा ज्ञेयमस्यास्ति नैव ॥ २३ ॥

सं० टी०—शुद्धेत्यादि· शुद्धद्रव्यं दर्शनज्ञानचारित्रात्मकनिरुपाधिजीवद्रव्यादि, तस्य स्वरसः स्वभावः, तेन भवनात् स्वभावस्य-चैतन्यादिलक्षणस्य स्वरूपस्य, शेषं द्रव्यात्पर अन्यद्रव्यं चेतनं वा किं भवति अपि तु परद्रव्यस्य स्वभाविनस्तद्द्रव्य-द्रव्यस्वभावः स्वरूपं न भवति, परद्रव्यं तस्य स्वभावि न भवतीति तात्पर्यं। यदि वा-अथवा सः स्वभावः चेतनादिलक्षणः तस्य-अचेतनाद्यन्यद्रव्यस्य स्वरूपं किं स्यात् ? अपि तु न स्यादेव। अथ स्वरूपस्वरूपिणोः परस्वरूपस्वरूपिभ्यां संकरव्यति-करादिदोषापत्ते· न किंचिच्चेतनमचेतनं वा स्यात् इममेवार्थं दृष्टांतयति-ज्योत्स्नारूपं सेटिकादिद्रव्यस्य श्वेतस्वरूपं भुवं-भूतलं, स्नपयति-धवलीकरोति, एव-निश्चयेन, तथापि भूमिः- विश्वंभरा तस्य-ज्योत्स्नारूपस्य स्वभावो नास्ति तस्य स्व-भाविनो ज्योत्स्ना स्वरूपं न, ज्योत्स्नायाः सेटिकास्वभावत्वात्। दृष्टांतेन स्पष्टं दार्ष्टांतं दर्शयति-ज्ञानं-स्वपरावभासः ज्ञेयं कर्मतापन्नं परपदार्थं, कलयति–परिच्छिनत्ति-जानाति, सदा-नित्यं, तथापि अस्य ज्ञानस्य ज्ञेयं स्वरूपं नैवास्ति, ज्ञेयस्य स्वरूपस्य ज्ञानं स्वरूपि नैवास्ति तयोः परस्परमत्यंतभेदात् ॥ २३ ॥ अथ ज्ञानस्वभावं वाच्यते—

अर्थ—जिस द्रव्यका जो निजभाव होय सो स्वभाव है। सो आत्माका ज्ञानचेतना स्वभाव है। ताकै शुद्ध द्रव्य जो शुद्ध आत्मा ताका निजरस ज्ञानचेतना है। ताकै होतै ते अन्य बाकी जो द्रव्य है सो कहा होय ? किछूमी न होय। परमार्थकरि संबंध नाही ॥ अथवा अन्यद्रव्य है ताकै यह स्वभाव कहा होय ? किछूमी न होय। परमार्थकरि संबंध नाही ॥ जैसे ज्योत्स्ना जो चांदणी ताका रूप पृथ्वीकूं उज्वल करै है, तौ कहा पृथ्वी चांदणीकी होय जाय ? किछूमी न होय। तैसे ज्ञान है सो ज्ञेयपदार्थकूं सदाकाल जानै है, तौ ज्ञेय ज्ञानका किछू कहा होय जाय ? किछूमी नाही है ॥ भावार्थ—शुद्धनयकी दृष्टिकरि देखिये तब कोई द्रव्यका स्वभाव काहू अन्यद्रव्यरूप होय नाही। जैसें चांदणी पृथ्वीकूं उज्ज्वल करै है परंतु चांदणीकी पृथ्वी किछू होय नाही है। तैसें ज्ञान ज्ञेयकूं जानै है परंतु ज्ञानका ज्ञेय किछू होय नाही ॥ आत्माका ज्ञान स्वभाव है सो याकी स्वच्छतामें ज्ञेय स्वयमेव झलकै है। तौऊ ज्ञानमें तिनि ज्ञेयनिका प्रवेश नाही है ॥ अब कहै हैं, जो ज्ञानमें रागद्वेषका उदय कहां ताई है ? ताका काव्य—

**रागद्वेषद्वयमुदयते तावदेतन्न यावज्ज्ञानं ज्ञानं भवति न पुनर्बोधतां याति बोध्ये ।**
**ज्ञानं ज्ञानं भवतु तदिदं न्यक्कृताज्ञानभावं भावाभावौ भवति तिरयन् येन पूर्णस्वभावः ॥२४॥**

सं० टी०—यावत्पर्यंतं ज्ञानं-बोधः, ज्ञानं-ज्ञायकं स्वपरावभासकं शुद्धं न भवति-न जायते, तावत्कालं, एतत्-जगत्प्रसिद्धं, रागद्वेषद्वयं-रागद्वेषयोर्द्वयं-द्वितयं उदयते अनुभागरूपेणोदयं धत्ते उदिते ज्ञाने तस्योदयाभावात्, पुनःयावज्ज्ञानं ज्ञानं-प्राकट्यप्राप्तं न, तावत् बोध्ये ज्ञेये वहिः पदार्थे बोधता ज्ञातृतां न याति-न प्राप्नोति ज्ञाते ज्ञाने स्वपरबोध्यप्रकाशकत्वात्, येन ज्ञानेन कृत्वा आत्मा, पूर्णस्वभाव' भवति-जायते। कीदृक्षः सन्? तिरयन्-आच्छादयन्, कौ? भावाभावौ-अस्तिनास्तिस्वभावौ-विभावपर्यायौ उत्पादविनाशौ वा, तत् इदं-प्रसिद्धं, ज्ञानं संसारावस्थासंभवात् रागद्वेषकल्मषीकृतं ज्ञानं शुद्धं स्वभावबोधो भवतु-अस्तु, कीदृक्षं? न्यगित्यादि'-न्यक्कृतः-तिरस्कृतः, अज्ञानलक्षणो भावः-स्वभावः, येन तत् ॥ २४ ॥ अथ सम्यग्दृष्टेस्तत्क्षयमाशंसति—

अर्थ—यहु ज्ञान जेतैं ज्ञानरूप न होय है, अर बोध्य कहिये ज्ञेय सो ज्ञेयभावकूं प्राप्त न होय है, तेतै रागद्वेप दोऊ उदय होय हैं। तातै यह ज्ञान है सो ज्ञानरूप होऊ। कैसा होऊ? दूरी कीया है अज्ञानभाव जानै ऐसा होऊ॥ तिस कारणकरि भाव अभाव ज्ञानमैं होय हैं। तिनिकूं दूरी करता संता पूर्णस्वभाव होय॥ जैतै ज्ञान ज्ञान रूप न होय, ज्ञेय ज्ञेयरूप न होय तैसैं रागद्वेप उपजै है। तातै यह ज्ञान अज्ञानभावकूं दूरि करी ज्ञानरूप होऊ। जिस करणतैं ज्ञानमें भाव अभाव ये दोय अवस्था हो तौ मिटि जाय अर ज्ञान पूर्ण स्वभावकूं प्राप्त होय जाय यह प्रार्थना है।

विशेष—सस्कृतटीकाकारने 'बोधतामेति बोध्ये, यह पाठ मानकर 'जवतक ज्ञान प्रकटित नहि हो जाता तवतक वह स्वपर ज्ञेय पदार्थोंको प्रकाशित नहि करता किंतु प्रकट होनेपर ही प्रकाशित करता है' यह अर्थ किया है और प जयचद्रजीने 'बोध्यतायाति बोध्य, यह पाठ मानकर 'जवतक ज्ञेय-पदार्थ ज्ञेयरूपसे प्रतिभासित नहि होता' यह अर्थ किया है ॥ २४ ॥

**रागद्वेषाविह हि भवति ज्ञानमज्ञानभावात् तौ वस्तुत्वप्रणिहितदृशा दृश्यमानौ न किंचित् ।**
**सम्यग्दृष्टिः क्षपयतु ततस्तत्त्वदृष्ट्या स्फुटं तौ ज्ञानज्योतिर्ज्वलति सहजं येन पूर्णाचलार्चिः॥२५॥**

सं० टी०—हि स्फुटं, ज्ञानं-बोधः, इह-जगति, रागद्वेषौ-रागद्वेषस्वभावौ भवति जायते कुतः? अज्ञानभावात्-अज्ञानमयस्वभावत्वात्। ननु कथं ज्ञानं रागद्वेषौ भवति? ज्ञानस्य ज्ञानावरणकर्मणः क्षयोपशमात् क्षयाद्वोदयात् तयोर्मोहनीयकर्मविवर्तत्वात्।

कथं ज्ञाने रागद्वेषसद्भाव इति चेत् सत्यं रागद्वेषयोर्भावकर्मणोश्चैतन्यविवर्तत्वात् ज्ञानस्वभावत्वं तथाग्रे समर्थयिष्यमाणत्वात् तदप्यभ्यधायि श्रीमद्विद्यानंदसूरिणा—

भावकर्माणि चैतन्यविवर्तात्मानि भांति नुः। क्रोधादीनि स्ववेद्यानि कथंचिच्चिद्भेदत. ॥ ११४ ॥ इति ।

तौ रागद्वेषौ, दृश्यमानौ-अंतर्दृष्ट्यावलोक्यमानौ संतौ न किंचित्-न किमपि ज्ञानिना दृश्येते, कया ? वस्त्वित्यादिः-वस्तुत्वे चैतन्यलक्षणे वस्तुस्वरूपे, प्रणिहितदृशा-समारोपितदृष्ट्या तत. अंतर्दृष्ट्याऽदृश्यमानत्वात् स्फुटं-निश्चितं, सम्यग्दृष्टिः तत्त्वदृशा पुमान्, तौ-रागद्वेषौ, क्षपयतु-निर्जरादिभिर्निराकरोतु तत्त्वदृष्ट्या-वस्तुयाथात्म्यदर्शनेन, येन-रागद्वेषक्षपणेन, सहजं स्वाभाविकं ज्ञानज्योति·-ज्ञानविभागप्रतिच्छेदसमूहं धाम, ज्वलति प्रकाशते। किंभूतं तत् ? पूर्णाचलार्चिः-पूर्णं निरावरणत्वात्संपूर्णं, अचलं अक्षोभ्यं, प्रतिपक्षकर्माभावात् अर्चिः-ज्ञानशक्ति·, यस्य तत् 'स्त्री नपुंसकयोरर्चिः' इति भद्रि· ॥ २५ ॥ अथ रागद्वेषोत्पादककारणं संगच्छते—

अर्थ—इस आत्माविषै ज्ञान है सोही अज्ञानभावतै रागद्वेषरूप परिणमै है। बहुरि ते रागादिक वस्तुपणाविषै स्थायिदृष्टिकरि देखे हुये किछूभी नाही है, द्रव्यरूप न्यारे वस्तु नाही हैं ॥ तातै आचार्य प्रेरणा करै हैं, जो सम्यग्दृष्टि पुरुष है सो तत्त्वदृष्टिकरि तिनिकूं प्रकट देखि अर क्षेपो नाश करो। ज्यौं स्वाभाविक ज्ञानज्योतिपूर्ण है प्रकाशरूप अचल दीप्ति जाकी ऐसी देदीप्यमान प्रकाशै ॥ भावार्थ—रागद्वेष न्याराही तौ द्रव्य नाही। जीवके अज्ञानभावतै होय है। तातै सम्यग्दृष्टि होय तत्त्वदृष्टिकरि देखिये, किछूभी वस्तु नाही ऐसै देखे घातकर्मका नाश होय केवलज्ञान उपजै है ॥ आगै कहै हैं जो, अन्यद्रव्यकरि अन्यद्रव्यके गुण नाही उपजाइये है, ताकी सूचनिकाका काव्य है—

रागद्वेषोत्पादकं तत्त्वदृष्ट्या नान्यद्द्रव्यं वीक्ष्यते किंचनापि ।
सर्वद्रव्योत्पत्तिरंतश्चकास्ति व्यक्तात्यंतं स्वस्वभावेन यस्मात् ॥ २६ ॥

सं० टी०—रागद्वेषोत्पादकं-रागद्वेषयोरुत्पादकं कारणं, अन्यद्द्रव्यं-आत्मद्रव्यं विहाय परद्रव्यमचेतनादि, न वीक्ष्यते-नावलोक्यते, कया-तत्त्वदृष्ट्या-वस्तुयाथात्म्यदर्शनेन, कुत· ? यस्मात्कारणात् सर्वेत्यादिः-सर्वेषां द्रव्याणा-चेतनानां, उत्पत्तिः-उत्पादः अंतः-अभ्यंतरे, स्वस्वभावेन स्वस्वरूपेण, अत्यंतं-निश्चितं व्यक्ता-स्फुटा, चकास्ति-द्योतते। ननु सर्वद्रव्याणां नित्यत्वात् कथमुत्पत्तिः अन्यथा सौगतमतस्यागतिः ? इति चेन्न स्वस्वभावेनेति वचनात् स्वपरिणामेन स्वपर्यायेणैवोत्पत्तिर्न तु द्रव्यरूपेण यथा

मृतिका कुंभभावेनोत्पद्यमाना किं कुंभकारस्वभावेनोत्पद्यते किं मृत्स्वरूपेण ? यदि प्राक्तनः पक्षः तदा कुंभकाराहंकारनिर्भरपुरुषाधिष्ठितप्रसारितकरतच्छरीराकारः कुंभः स्यात्, न च तथास्ति अत एवोत्तरः पक्षः श्रेयान् मृदेव कुंभस्योत्पादिका न तु कुंभकारः। तथा रागद्वेषौ पुद्गलस्वभावेनानुत्पद्यमानौ केवलमात्मनः स्वभावो अन्योऽन्यस्योत्पादकत्वे तत्त्वव्यवस्थानाभावात् सर्वोच्छेदः स्यात् ॥ २६ ॥ अथ तद्धेतुत्वमात्मन संगिरते—

अर्थ—रागद्वेषका उपजावनेवाला तत्त्वदृष्टिकरि देखिये तब अन्यद्रव्य किछूभी नाही देखिये है ॥ चेतनहीके परिणाम हैं। जातैं यह न्याय है-जो सर्व द्रव्यनिकी उत्पत्ति है सो अपनेही निज स्वभावविषैं अंतरंगविषै अत्यंत प्रगटरूप शोभै है। अन्यद्रव्यविषै अन्यके गुणपर्यायनिकी उत्पत्ति नाही है ॥

यदिह भवति रागद्वेषदोषप्रसूतिः कतरदपि परेषां दूषणं नास्ति तत्र।
स्वयमयमपराधी तत्र सर्पत्यबोधो भवतु विदितमस्तं यात्वबोधोऽस्मि बोधः ॥२७॥

सं॰ टी॰—यत् यस्मात्कारणात्, इह-आत्मनि रागेत्यादिः-रागश्च द्वेषश्च रागद्वेषौ तावेव दोषौ स्वस्वरूपाच्छादकत्वात् तयोः प्रसूतिः-उत्पत्तिः स्यात् तत्र तथा सति परेषां अचेतनद्रव्याणां, कतरदपि किमपि, दूषणं-दोषः, नास्ति अचेतनद्रव्यस्य तदुत्पादकत्वाभावात् न तस्य दूषणं केवलमात्मनो दूषणं। तत्र-रागद्वेषे, आत्मनि सर्पति व्याप्नुवति सति आत्मा स्वयं स्वरूपेण, अपराधी दोषवान् भवतु-अस्तु किंभूतः सः ? अबोध बोधरहितः सन् विदितं मया ज्ञातं अयं अबोधः-अज्ञानं, अस्तं विनाशं, यातु प्राप्नोतु पुनः बोधः-अहं ज्ञानं, अस्मि-भवामि ॥ २७ ॥ अथान्यनिमित्तत्वं तयोस्तीर्यते—

अर्थ—जो इस आत्माविषै रागद्वेष दोषकी उत्पत्ति है तहां परद्रव्यकूं किछूभी दूषण नाही है ॥ तिस आत्माविषैं यह अज्ञान आप अपराधी फैलै है। यह कथन प्रगट होऊ, अर यह अज्ञान है सो अस्त होऊ। जातै मैं तो ज्ञानस्वरूप हौं, ऐसै मानना सम्यग्ज्ञान है ॥ भावार्थ—अज्ञानी जीव रागद्वेषकी उत्पत्ति परद्रव्यतैं मानि परद्रव्यतैं कोप करै है। जो मेरे परद्रव्य रागद्वेष उपजावै है। ताकूं दूरी करूं ॥ ताकूं समझावनेकूं कहै हैं-जो रागद्वेषकी उत्पत्ति अज्ञानतै आपहीकेविषै होय है। ते आपहीके अशुद्ध परिणाम हैं ॥ सो यह अज्ञान नाशकूं प्राप्त होऊ अर सम्यग्ज्ञान प्रगट होऊ, आत्मा ज्ञानस्वरूप है ऐसा अनुभव करौ। रागद्वेषके उपजनेमें परद्रव्यकूं उपजावनहारा मानि तिसपरि कोप मति करौ। ऐसा उपदेश है ॥ अब इसही अर्थकूं दृढ करनेकूं अर अगिले कथनकी सूचनिकारूप काव्य कहै हैं—

रागजन्मनि निमित्ततां परद्रव्यमेव कलयंति ये तु ते ।
उत्तरंति न हि मोहवाहिनीं शुद्धबोधविधुरांधबुद्धयः ॥ २८ ॥

सं० टी०—ये वस्तुस्वरूपानभिज्ञपक्षाः साख्याः, रागजन्मनि- रागद्वेषोत्पत्तौ, परद्रव्यमेव--आत्मान्यद्रव्यं रागोत्पत्तौ मणिकनककामिनीप्रमुखं, द्वेषोत्पत्तौ-विषविपक्षकर्कशकंटकादिद्रव्यं, एव निश्चयेन, निमित्तता-हेतुतां, कलयंति प्रतिपादयंति कलि वलि कामधेनुः इति कामधेनावुक्तत्वात्कलेः प्रतिपादनार्थं । तु पुनः,ते- जडधियः हि-निश्चितं, मोहवाहिनीं-महामोहनिम्नगा, नोत्तरति-उत्तर्तुं न शक्नुवति स्वरूपानभिज्ञत्वात्, कीदृक्षाः संतः ? शुद्धेत्यादिः- शुद्धबोधेन-कर्ममलकलंकरहितेन ज्ञानेन, विधुरा रहिता अंधा, स्वरूपदर्शनाभावात् बुद्धिर्मतिः येषां ते, तत्कथं न कारण ? तथाहि-यद्धि यत्र भवति तद्घातेन तद्धन्यते एव यथा प्रदीपघाते प्रकाशो हन्यते, न हन्यते च स्त्र्यादीना विनाशे रागादि. तस्मात्तथा न, तथा च यत्र हि यद्भवति तत्तद्घाते हन्यते एव यथा प्रकाशाघाते प्रदीपो हन्यते एव न हन्यते च रागादीनां विनाशे कमनीयकामिन्यादिः तस्माच्च तत्तथा, यत्तु न यत्र भवति तत्तद्घाते न हन्यते यथा घटघाते घटप्रदीपो न हन्यते, न हन्यते स्त्रीघाते रागादिः, यत्र हि यत्र भवति तत्तद्घाते न हन्यते यथा घटप्रदीपघाते घटो न हन्यते, न रागादिघाते च स्त्र्यादिर्हन्यते तस्माच्च तत्तथेति ॥ २८ ॥ अथ बोधाबोधयोरन्यत्वमुन्नीयते—

अर्थ—जे पुरुष रागकी उत्पत्तिविषै परद्रव्यहीका निमित्तपणा मानै हैं, अपना किछूभी हेतु न मानै हैं, ते मोहरूप नदीके पार नाही उतरै हैं ॥ जातै शुद्धनयका विषयभूत जो आत्माका स्वरूप ताका ज्ञानकरि रहित अंध है बुद्धि जिनिकी ते ऐसे हैं ॥ भावार्थ—शुद्धनयका विषय आत्मा अनंतशक्तीकूं लीये चैतन्यचमत्कारमात्र नित्य अभेद एक है । तामैं यह स्वच्छता है, जो, जैसा निमित्त मिलै तैसे आप परिणमै है ॥ ऐसा नाही, जो पैला परिणमावै तैसे परिणमै है अपना किछू पुरुषार्थ नाही है ॥ सो ऐसे आत्माका स्वरूपका जिनिकूं ज्ञान नाही है, ते ऐसे मानै है, जो आत्माकूं परद्रव्य परिणमावै है, तैसे परिणमै है । ते ऐसे माननेवाले मोहकी वाहिनी जो सेना, अथवा नदी, रागद्वेषादि परिणाम तिनितैं पार नाही हो हैं । तिनिके रागद्वेष नाही मिटै हैं ॥ जातै अपना पुरुषार्थ तिनिके होनेमैं होय तौ तिनिके मेटनेमैंभी होय । अर परहीके कीये होय तौ पैला कीयाही करै । अपना मेटना काहेका ? तातैं अपना कीया होय अपना मेटया मिटै, ऐसैं कथंचित् मानना सम्यग्ज्ञान है ॥

विशेष—राग आदिकी उत्पत्तिमें परद्रव्य कारण नही इस सिद्धातको दृढरूपसे मंडन करनेकेलिये संस्कृत टीकाकारने ये व्याप्तिया वतलाई है—जो जहा रहता है उसके ( आधारके ) नाश होनेसे उसका ( आधेयका ) नाश हो जाता है जिसप्रकार प्रदीपके नाश होनेपर प्रकाश नहि रहता । परंतु स्त्री आदिके नाश होनेपर राग आदिका नाश नहिं होता । तथा जहा जो होता है वह उसके नष्ट होनेपर नष्ट होजाता है जिसप्रकार प्रकाशके नाश होजानेपर प्रदीप । परतु राग आदिके नष्ट होजानेपर स्त्री आदिका नाश नहि होता इसलिये स्त्री आदि राग आदिकी उत्पत्तिमे कारण नहीं । जो जहापर नहीं होता वह उसके नष्ट होनेपर नष्ट नहि होता जिसप्रकार घटके नाश होजानेपर उसके भीतर रक्खा हुआ दीपक नष्ट नहि होता उसीप्रकार स्त्रीके नष्ट होजानेसे राग आदिका भी नाश नहि होता तथा जहा जो नहि होता उसके नाशसे उसका भी नाश नहि होता जिसप्रकार दीपकके नष्ट होनेपर घटका नाश नहि होता उसीप्रकार राग आदिके नाश होनेसे स्त्री आदिका भी नाश नहि होता इसरीतिसे राग आदिकी उत्पत्तिमें आत्मासे भिन्न परद्रव्य ही कारण है साख्यका यह सिद्धात मिथ्या हुआ ॥ २८ ॥

पूर्णैकाच्युतशुद्धबोधमहिमा बोधो न बोध्यादयं
यायात्कामपि विक्रियां तत इतो दीपः प्रकाश्यादिव ।
तद्वस्तुस्थितिबोधवंध्यधिषणा एते किमज्ञानिनो
रागद्वेषमया भवंति सहजां मुंचत्युदासीनतां ॥ २९ ॥

सं० टी०—इव यथा, इतः-अस्मात्, प्रकाश्यात्-प्रकाशयितुं योग्यात् घटपटादेः दीपः-कज्जलध्वजः, कामपि विक्रियां न याति देवदत्तो हि यज्ञदत्तमिव हस्ते गृहीत्वा मा प्रकाशयेति घटपटादिः स्वप्रकाशने दर्शधनं न प्रयोजयति प्रदीपोऽपि न चायःकांतोपलाकृष्टाय सूचीवत् स्वस्थानात्प्रच्युत्य तं प्रकाशयितुमायाति वस्तुस्वभावस्य परेणोत्पादयितुमशक्यत्वात् परमुत्पादयितुमशक्यत्वाच्च तदसन्निधाने तत्संनिधाने च स्वरूपेणैव स प्रकाशते । तथा अयं बोधः-ज्ञानं, ततः-तस्मात् वहिरर्थात् शब्दरूपगंधरसस्पर्शगुणद्रव्यादेः, बोध्यात् बोद्धुं-ज्ञातुं योग्यात् कामपि विक्रियां देवदत्तो यज्ञदत्तमिव करे गृहीत्वा मां शृणु मां पश्येत्यादिनि स्वज्ञाने नात्मानं प्रेरयति न चात्माप्ययःसूचीवत् स्वस्थानात् तान् ज्ञातुमायाति किं तु स्वभावत एव जानाति इति विक्रियां न यायात्-न गच्छेत्। कीदृक्षो बोधः? पूर्णैकेत्यादिः-पूर्णः स्वगुणपर्यायैः संपूर्णः एकः अच्युतः-अक्षोभ्यः, शुद्धः-कर्म-

मलरहितः स चासौ बोधश्च तस्य तेन वा महिमा-माहात्म्यं यस्य सः ततः-तस्मात् एते-प्रसिद्धा बौद्धा ज्ञानेन तदाकार-तदुत्पत्ति तद् व्यवसायवादिनः अज्ञानिनः किं-किमु रागद्वेपमया भवंति, कीदृक्षाः? वस्त्वित्यादि-वस्तुनःस्थितिः नयोपनयैकांतसमुच्चयरूपा तस्या बोधेन वंध्या रहिता धिपणा मतिर्येपा ते, पुनः सहजा-स्वभावजां उदासीनतां-रागद्वेषभावलक्षणां माध्यस्थ्य कथं मुंचति ॥ २९ ॥ अथ निश्चयप्रतिक्रमणप्रत्याख्यानालोचनाचारित्रं विंदति—

अर्थ--यह बोद्धा कहिये ज्ञानी है सो पूर्ण अर एक जो च्युत नाही होय अर शुद्ध-विकारतैं रहित ऐसा जो ज्ञान तिसस्वरूप है महिमा जाकी ऐसा है। सो ऐसा ज्ञानी बोध्य कहिये ज्ञेयपदार्थ तिनितै किछूभी विक्रियाकूं नाही प्राप्त होय है ॥ जैसैं दीपक है सो प्रकाशनेयोग्य घटपट आदि पदार्थ हैं तिनितै विक्रियाकूं प्राप्त नाही होय है तैसे ॥ सो ऐसे वस्तूकी मर्यादाका ज्ञानकरि रहित है धिपणा कहिये बुद्धि जिनकी ऐसे भये संते ए अज्ञानी जीव अपनी स्वाभाविक उदासीनताकूं क्यौं छोडै हैं? रागद्वेपमय क्यौं होय हैं? ऐसा आचार्यने शोच किया है ॥ भावार्थ—ज्ञानका स्वभाव ज्ञेयकूं जाननेहीका है। जैसा दीपकका स्वभाव घटपट आदिककू प्रकाशनेका है। यह वस्तुस्वभाव है। ज्ञेयकूं जाननेमात्रतै ज्ञानमें विकार नाही होय है। अर ज्ञेयकूं जानिकरि भला बुरा मानि आत्मा रागी द्वेपी विकारी होय है। सो यह अज्ञान है। सो आचार्य शोच किया है-जो वस्तूका स्वभाव तौ ऐसे, अर यह आत्मा अज्ञानी होयकरि रागद्वेपरूप क्यौ परिणमै है? अपनी स्वाभाविक उदासीनता अवस्थारूप क्यौ रहै नाही?। सो यह आचार्यका शोच युक्त है, जातै जेतै शुभ राग हैं तेतै प्राणीनिकूं अज्ञानतै दुःखी देखि करुणा उपजै तब शोच होय है ॥ अब अगिले कथनकी सूचनिकारूप काव्य कहै हैं—

रागद्वेषविभावमुक्तमहसो नित्यं स्वभावस्पृशः
पूर्वागामिसमस्तकर्मविकला भिन्नास्तदात्वोदयात्।
दूरारूढचरित्रवैभवबलां चंचच्चिदर्चिर्मयीं
विंदंति स्वरसाभिषिक्तभुवनां ज्ञानस्य संचेतनां ॥ ३० ॥

सं० टी०--रागेत्यादिः-रागद्वेपौ तौ च तौ विभावौ च विभावपर्यायौ ताभ्यां मुक्तं महो येपां ते पुरुपाः, ज्ञानस्य संचेतनां-सम्यग्ज्ञायकत्वं, विंदंति लभंते, कीदृक्षां तां? चंचदित्यादिः-चंचत् देदीप्यमाना चित्-दर्शनज्ञानं, सैवार्चिः-प्रकाशः-तेन निर्वृत्तां

स्वेत्यादि:-स्वस्य रसेन-स्वभावेन, अभिषिक्तं सिंचितं, लक्षणया ज्ञातं, भुवन त्रैलोक्यं यया तां, कीदृशास्ते ? नित्यं-पश्चिद्रतया निरतरं, स्वभावस्पृशः-स्वभावं-चैतन्यस्वरूपं, नित्यस्वभावमिति पाठः नित्यश्चासो स्वभावश्च शुद्धज्ञानस्वभावः तं स्पृशंति-ध्यानविषयीकुर्वंति इति पूर्वेत्यादि- पूर्वं समस्तकर्मभिर्विकला- यत्पूर्वं कृतं शुभाशुभ कर्म तस्मान्निवर्तयत्यात्मानं तु यः स प्रतिक्रमणं भविष्यत्समस्तकर्मविकलाः यद्भविष्यच्छुभाशुभं कर्म तस्मान्निवर्तते य आत्मानं स प्रत्याख्यानं अनेनात्मनः प्रतिक्रमणप्रत्याख्याने निगदिते, तदात्वोदयात् तदात्वनोदीर्णकर्मणः, भिन्नाः अनेनालोचनमुक्तं यच्छुभाशुभ कर्मोदीर्णं संप्रति चानेकविस्तरविशेषं यश्च नित्यमालोचयति स खल्वालोचना चेतयतेति। कुतः लभंते तां? दूरेत्यादि-दूराकृढं नित्यं प्रत्याख्यानप्रतिक्रमणालोचनात्स्वभावात् दूरं-अतिशयेन, आरूढं संप्राप्तं, चरित्रं तत्त्रितयलक्षणं तस्य वैभवं-माहात्म्यं, तस्य बलात् सामर्थ्यात्, इति स्वरूपं चारित्रं निगदितं ॥ ३० ॥ अथ ज्ञानसंचेतनां चेतयते—

अर्थ—ज्ञानी हैं ते कैसे हैं ? रागद्वेष जे विभाव तिनिकरि रहित है मह कहिये तेज जिनिका । बहुरि कैसे हैं ? नित्यही अपना चैतन्यचमत्कारमात्रस्वभाव है ताकूं स्पर्शनेवाले हैं। बहुरि कैसे हैं ? पूर्वे किये जे समस्तकर्म अर आगामी होयगे जे समस्तकर्म तिनितैं रहित हैं। बहुरि कैसे हैं ? तदात्व कहिये वर्तमानकालमें आवै जो कर्मका उदय तातैं भिन्न हैं। ऐसें ज्ञानी हैं ते अतिशयकरि अंगीकार किया जो चारित्र ताका जो विभव समस्तपरद्रव्यका त्याग ताके बलतैं ज्ञानकी सम्यक्प्रकार चेतना ताकू अनुभवै हैं॥ कैसी है ज्ञानचेतना ? चञ्चत् कहिये चिमकती जागती जो चैतन्यरूप ज्योति तिममयी है। बहुरि कैसी है ? अपना ज्ञानरूप रस ताकरि सिंच्या है भुवन कहिये तीन लोक जीहि ॥ भावार्थ—जिनिका रागद्वेष गया अर अपने चैतन्यस्वभावका अंगीकार भया अर अतीत अनागत वर्तमान कर्मका ममत्व गया ऐसे ज्ञानी सर्व परद्रव्यतें न्यारे होय चारित्रकूं अंगीकार करे हैं। ताके बलतैं कर्मचेतना अर कर्मफलचेतनातैं न्यारी जो अपनी चैतन्यके परिणमनस्वरूप ज्ञानचेतना ताकूं अनुभवन करे हैं ॥ इहां तात्पर्य यह जानना—जो पहलै तौ कर्मचेतना अर कर्मफलचेतनातैं भिन्न अपनी ज्ञानचेतनाका स्वरूप आगमन अनुमान स्वसंवेदन-प्रमाणतैं जानै अर ताका श्रद्धान-प्रतीति दृढ करै, सो यह तौ अविरत देशविरत प्रमत्त अवस्थामैं भी होय है ॥ बहुरि जब अप्रमत्त अवस्था होय है, तब अपना स्वरूपहीका ध्यान करै है । तब ज्ञानचेतनाका जैसा श्रद्धान किया तिसविषैं लीन होय है तब श्रेणी चढि केवलज्ञान उपजाय साक्षात् ज्ञानचेतना होय है। ऐसैं जानना ॥

## ज्ञानस्य संचेतनयैव नित्यं प्रकाशते ज्ञानमतीव शुद्धं ।
## अज्ञानसंचेतनया तु धावन् बोधस्य शुद्धिं निरुणद्धि बंधः ॥ ३१ ॥

सं० टी०—ज्ञानस्य-आत्मनः, गुणे गुणिन उपचार संचेतनया सम्यग्ध्यानेन, एव निश्चयेन, ज्ञानं-बोध नित्यं-निरंतर, प्रकाशते चकास्ति, किं ? अतीव शुद्धं अत्यंतं निरावरणं, तु-पुन अज्ञानसंचेतनया ज्ञानादन्यत्र इदमहमिति चेतनं अज्ञानचेतना सा द्विधा-कर्मचेतना कर्मफलचेतना च। तत्र ज्ञानादन्यत्र इदमहं करोमीति चेतनमाद्या, वेदयेहं ततोऽन्यत्रेदमिति चेतनं द्वितीया। तया बंधः-अष्टविधकर्मणा बंधः धावन् आस्कंदन् सन् बोधस्य ज्ञानस्य शुद्धिं निरुणद्धि-आच्छादयति अतो मोक्षार्थिना सा हेया ३१ अथ नैष्कर्म्यमवलंबते—

अर्थ—ज्ञानकी संचेतनाकरि ही ज्ञान है सो अत्यंत शुद्ध निरतर प्रकाशै हैं। बहुरि अज्ञानकी चेतनाकरि बंध है सो दोडता संता ज्ञानकी शुद्धताकूं रोकै है, न होने दै है ॥ भावार्थ—संचेतना कहिये जो जहां जिसतै एकाग्र होय तिसही ओर अनुभवनरूप स्वाद लीया करै सो तिस स्वरूप चेतना कहिये। सो जब ज्ञानहीतै एकाग्र उपयुक्त होय तिसही ओर चेत राखै सो तौ ज्ञानचेतना है। सो यातैं तौ ज्ञान अत्यंत शुद्ध होय प्रकाशै है, केवलज्ञान उपजि आवै है तब संपूर्ण ज्ञानचेतना नाम पावै ॥ बहुरि अज्ञान जो कर्म अर कर्मका फलरूप उपयोगकूं करना सो तिसही ओर एकाग्र हो अनुभव करना सो अज्ञानचेतना है। सो यातै कर्मका बध होय है सो ज्ञानकी शुद्धताकूं रोकै है ॥

## कृतकारितानुमननैस्त्रिकालविषयं मनोवचनकायैः ।
## परिहृत्य कर्म सर्वं परमं नैष्कर्म्यमवलंबे ॥ ३२ ॥

सं टी —परमं-उत्कृष्टतमं, नैष्कर्म्यं-कर्मस्वभावातिक्रांतं स्वं अवलंबे-अहमवलंबयामि। किंकृत्वा ? त्रिकालविषयं-अतीतानागतवर्तमानविषयं सर्वं कर्म,कृतकारितानुमननै· कृतं स्वयं, कारितं परै·, अनुमनितं परकृतानुमोदितं मनोवचनकायैः परिहृत्य-निराकृत्य मनोवचनकायै कृतकारितानुमननै· यदतीतकर्मनिराकरणं तत्प्रतिक्रमणं, यत्तैस्तैर्वर्तमानकर्मनिराकरणमालोचना, यद्भविष्यत्कर्म तैस्तैर्निराकरणं तत्प्रत्याख्यानं, तदक्षसंचारिणा नीयते ' पढमक्खो अंतगतो आदिगदो संकमेदि विदियक्खो इति सूत्रेण, तथाहि यन्मनसा कृतं दुष्कृतं मे मिथ्येति, यन्मनसा कारितं मिथ्या मे दुष्कृतमिति, यन्मनसानुमनितं मिथ्या मे

दुष्कृतमिति यन्मनसा कृतं कारितं मिथ्या मे दुष्कृतं इति एकसंयोगद्विसंयोगत्रिसंयोगोत्पन्नभेदाः एकान्नपंचाशत्प्रतिक्रमणभेदा जायंते ॥ ३२ ॥ अथ स्वस्वरूपप्रतिक्रमणं चंक्रम्यते—

अर्थ—अतीत अनागत वर्तमानकालसंबंधी सर्वही कर्म हैं ताही कृत, कारित, अनुमोदना, अर मनवचनकायकरि परिहारकरि छोडिकरि उत्कृष्ट निष्कर्म अवस्था है, ताही मैं अवलंबन करौं हौं। ऐसैं सर्व कर्मका त्याग करनेवाला ज्ञानी प्रतिज्ञा करै है ॥ अब सर्वकर्मका त्याग करनेका कृत कारित अनुमोदना मनवचनकायकरि गुणचास भंग होय हैं। तहां अतीतकालसंबंधी कर्मके त्याग करनेकूं प्रतिक्रमण कहिये।

मोहाद्यदहमकार्षं समस्तमपि कर्म तत्प्रातिक्रम्य ।
आत्मनि चैतन्यात्मनि निष्कर्मणि नित्यमात्मना वर्ते ॥ ३३ ॥

सं० टी०—आत्मनि-चिद्रूपे, आत्मना ज्ञानेन कृत्वा, नित्यं वर्त्ते-सततमहं प्रवर्तयामि कीदृशे ? चैतन्यात्मनि-चेतनास्वरूपे. पुनः कीदृशे ? निष्कर्मणि-कर्ममलातीते, किंकृत्वा ? तत् पूर्वनिबद्धं समस्तमपि कर्म प्रतिक्रम्य-निराकृत्य, तत्किं ? यत् कर्म, अहं अहकं, मोहात्-भ्रांतिविजृंभणात्, अकार्षं कृतवान् यदहमचीकरं यदहं कुर्वंतमप्यन्यं समन्वज्ञासं मनसा वचसा वपुषा च एतत्स्वस्वरूपप्रतिक्रमणं ॥ ३३ ॥ इति प्रतिक्रमणकल्पः समाप्तः ॥ अथालोचनामालोचयति—

अर्थ—जो मै मोहतै अज्ञानतै, अतीतकालविषैं कर्म कीये, तिनि समस्तहीकूं प्रतिक्रमणरूपकरि अर समस्त कर्मतैं रहित चैतन्यस्वरूप जो आत्मा ताविषै आपहीकरि निरतर वर्तौं हौं। ऐसै ज्ञानी अनुभव करै ॥ भावार्थ—अतीतकालमे किये कर्मका गुणचास भगरूप मिथ्याकार प्रतिक्रमणकरि ज्ञानी ज्ञानस्वरूप आत्माविषैं लीन होय निरंतर अनुभव करै। ताका यह विधान है ॥ मिथ्या कहनेका प्रयोजन यहु जो, जैसै कोई पहलै धन कमाय घरमै धरया था। पीछे तासूं ममत्व छोडया। तब ताका भोगनेका अभिप्राय नाही। कमाया था जैसा न कमाया। तैसै कर्म बांध्या था, ताकूं अहित जानि ममत्व छोड्या। ताका फलमें लीन न होयगा, तब बाध्या मिथ्या ही है। ऐसा जानना ॥ ऐसा प्रतिक्रमणकल्प है ॥ अब आलोचनाकल्प है—

मोहविलासविजृंभितमिदमुदयत्कर्म सकलमालोच्य ।

## आत्मनि चैतन्यात्मनि निष्कर्मणि नित्यमात्मना वर्ते ॥ ३४ ॥

सं० टी०—आत्मनि आत्मना नित्यं वर्ते चैतन्यात्मनि निष्कर्मणि च, किंकृत्वा ? इदं प्रसिद्धं, सकलं-समस्तं, उदयत् उदयनिषेकावस्थापन्नं, कर्म ज्ञानावरणादि, आलोच्य-सम्यग्विवेच्य, किंभूतं ? मोहेत्यादिः-मोहस्य रागद्वेषरूपस्य, विलास॰ विलसनं तेन विजृंभितं निष्पादितं, अत्राप्यक्षसंचारः करोमि कारयामि समनुजानामि मनसा वचसा कायेन। मनसा कर्म न करोमि मनसा न कारयामि, मनसा कुर्वंतमप्यन्यं न समनुजानामि. मनसा न करोमि न कारयामि, मनसा न करोमि कुर्वंतमप्यन्यं न समनुजानामि एवमेकद्वित्रिसंयोगेन आलोचनभेदा एकान्नपंचाशत् संबोभुवति ॥ ३४ ॥ इत्यालोचनाकल्प॰ समाप्तः ॥ अथ स्वप्रत्याख्यानमाख्याप्यते—

अर्थ–निश्चयचारित्रकूं अंगीकार करनेवाला कहै है जो, मोहके विलासकरि फैल्या यह उदयकूं प्राप्त होता जो वर्तमान कर्म ताकू समस्तकूं आलोचनामै लेकरि समस्तकर्मसूं रहित चैतन्यस्वरूप जो आत्मा ताविषै मैं आपहीकरि निरतर वर्तों हौं ॥ भावार्थ–वर्तमानकालमै कर्मका उदय आवै, ताकूं ज्ञानी ऐसे विचारै है । जो, पूर्वे बांध्या था ताका यह कार्य है। मेरा तौ यह कार्य नाही। मै याका कर्ता नाही। मै तौ शुद्ध चैतन्यमात्र आत्मा हौं । ताकी दर्शनरूप प्रवृत्ति है। ताकरि या उदय भये कर्मका देखने जाननेवाला हौं । मेरा स्वरूपहीमै मै वर्तौं हौं । ऐसा अनुभवन करनाही निश्चयचारित्र है ॥ ऐसै आलोचनाकल्प समाप्त कीया ॥ आगै प्रत्याख्यानकल्प कहै हैं–

## प्रत्याख्याय भविष्यत्कर्म समस्तं निरस्तसंमोहः ।
## आत्मनि चैतन्यात्मनि निष्कर्मणि नित्यमात्मना वर्ते ॥ ३५ ॥

सं० टी०—चैतन्यात्मनि निष्कर्मणि आत्मनि, नित्यं, आत्मना कृत्वा वर्ते ध्यानरूपेणाहं। कीदृक्षोहं? निरस्तसंमोहः दूरीकृतरागद्वेष॰ । किं विधाय ? समस्तं भविष्यत्कर्म प्रत्याख्याय निराकृत्य करिष्यत् करिष्यमाण समनुज्ञास्यन्मनोवचनकायैः निरुध्य, इति प्रत्याख्यानं समाप्तं, तथा चाक्षसंचारोऽत्र करिष्यामि कारयिष्यामि समनुज्ञास्यामि मनसा वचसा कायेन। मनसा कर्म न करिष्यामि, मनसा न कारयिष्यामि, मनसा कुर्वंतमप्यन्यं न समनुज्ञास्यामि, मनसा न करिष्यामि न कारिष्यामि, मनसा न करिष्यामि कुर्वंतमप्यन्यं न समनुज्ञास्यामि एवमेकद्वित्रिसंयोगजा॰ एकोनपंचाशत्प्रत्याख्यानभेदा जायंते ॥ ३५ ॥ इति प्रत्याख्यानकल्पः समाप्तः। अथैतत्त्रयं त्रायते—

अर्थ—प्रत्याख्यान करनेवाला ज्ञानी कहै है। जो आगामी समस्त कर्मनिकू मैं प्रत्याख्यानरूप त्याग करि, अर नष्ट भया है मोह जाका ऐसा भया संता कर्मसूं रहित चैतन्यस्वरूप जो आत्मा ताविषै आपही करि वर्तूं हौं ॥ भावार्थ—निश्चयचारित्रमैं प्रत्याख्यानका विधान ऐसा है, जो, समस्त आगामी कर्मसूं रहित अपना शुद्धचैतन्यकी प्रवृत्तिरूप जो शुद्धोपयोग ताविषै वर्तना है। सो ज्ञानी आगामी समस्त कर्मका प्रत्याख्यान करि अपना चैतन्यस्वरूपविषै वर्तै है ॥ इहां तात्पर्य ऐसा जानना—जो व्यवहारचारित्रमें तौ ज्यौ प्रतिज्ञामै दोष लागै ताका प्रतिक्रमण, आलोचना, प्रत्याख्यान होय हैं। अर इहां निश्चयचारित्रका प्रधानपणै कथन है ॥ सो शुद्धोपयोगसूं विपरीत समस्त ही कर्म आत्माके दोषस्वरूप हैं। तिनि सर्वही कर्मचेतनास्वरूप परिणामका ज्ञानी तीन कालके कर्मका प्रतिक्रमण अलोचना प्रत्याख्यानकरि समस्तकर्मचेतनासूं न्यारा अपना शुद्धोपयोगस्वरूप आत्माका ज्ञान श्रद्धान करि, अर तिसमैं थिर होनेका विधानकरि निष्प्रमाद दशाकूं प्राप्त होय। श्रेणी चढि केवलज्ञान उपजानेके सन्मुख होय है ॥ यह ज्ञानीका कार्य है ॥ ऐसा प्रत्याख्यानकल्प समाप्त कीया ॥ आगै सकलकर्मका सन्यास कहिये क्षेपणा—पटकी देना, ताकी भावनाकूं नृत्य कराय कथन पूरण करनेका काव्य है—

**समस्तमित्येवमपास्य कर्म त्रैकालिकं शुद्धनयावलंबी।**
**विलीनमोहो रहितं विकारैश्चिन्मात्रमात्मानमथावलंबे ॥ ३६ ॥**

सं० टी०—अथ प्रतिक्रमणादिकथनादनतर, चिन्मात्रं चेतनामयं, आत्मानं-स्वचिद्रूपं, अवलंबे-ध्यायामि अहं, कीदृशं? विकारैः-कर्मोत्पन्नप्रकृतिभिः रहितं, कीदृक्षोहं ? शुद्धेत्यादि· शुद्धं स्वस्वरूपं, नयति-प्राप्नोति, इति शुद्धनयः, आत्मानं अवलंवत इत्येवंशीलः, पुनः कीदृक्ष ? विलीनमोह·-विनष्टरागद्वेषमोहः, किकृत्वा ? इत्येवं पूर्वोक्तं प्रतिक्रमणादिकथनरूपेण समस्त-निखिलं, त्रैकालिकं त्रिकाले-अतीतानागतवर्तमाने भव त्रैकालिकं, कर्म-ज्ञानावरणादि, अपास्य-निराकृत्य ॥ ३६ ॥ अथ सकलकर्मफलसंन्यासभावना नाटयति—

अर्थ—शुद्धनयका अवलंवन करनेवाला कहै है, जो इत्येवं कहिये पूर्वोक्तप्रकार तीनकाल-अतीतवर्तमानभविष्यत्—संबंधी कर्मकूं निराकरणकरि छोडिकरि अर शुद्धनयका अवलंबन करनेवाला ज्ञानी मैं हौं। सो विलय भया है मोह—मिथ्यात्वकर्म जाका ऐसा भया संता अब समस्तविकारतै रहित चैतन्यमात्र आत्माकूं अवलंबूं हौं ॥ अब सकलकर्मफलका संन्यासकी भावनाकूं नृत्य करावे हैं—

विगलंतु कर्मविषतरुफलानि मम भुक्तिमंतरेणैव ।
संचतयेऽहमचलं चैतन्यात्मानमात्मानं ॥ ३७ ॥

सं० टी०—मम आत्मन' कर्मेत्यादि-कर्म एव विषतरुः-विषवृक्षः चेतनाच्छादकत्वात् तस्य फलानि-शुभाशुभानि विगलंतु-स्वयं गलित्वा पतंतु-प्रलयं यात्वित्यर्थः कथं ? भुक्तिमंतरेण-उदयदानं विना, अहं आत्मानं संचेतये-ध्यायामि, कीदृशं ? अचलं अक्षोभ्यं, चैतन्यात्मानं दर्शनज्ञानचेतनास्वरूपं तथाहि-नाहं मतिज्ञानावरणीयफलं भुंजे चैतन्यात्मानमात्मानमेव संचेतये, नाहं श्रुतज्ञानावरणीयफलं भुंजे चैतन्यात्मानमात्मानमेव संचेतये एवं ज्ञानावरणपंचके दर्शनावरणनवके, वेदनीयद्विके, दर्शनमोहनीयत्रिकें, चारित्रवेदनीयाख्यमोहनीयपंचविंशतिके, आयुश्चतुष्के, नामकर्मणस्त्रयोनवतिप्रकृतौ, गोत्रद्विके, अंतरायपंचके योजनीयं विस्तरभयात् सुगमत्वाच्च न लिखितमत्र ॥ ३७ ॥ अथात्मतत्त्वे कालावलीं सफलामभिरमयति—

अर्थ—सकलकर्मफलकी संन्यासभावना करनेवाला कहै है, जो, कर्मरूपी विषका वृक्षके फल हैं ते मेरे भोगनेविनाही खिरि जावो ॥ मै चैतन्यस्वरूप जो मेरा आत्मा ताकूं निश्चल चेतूं हौं-अनुभवूं हौं । भावार्थ—ज्ञानी कहै है, जो कर्मका फल उदय आवै है, ताकूं मै ज्ञाता द्रष्टा हुवा देखू हौं, ताका फलका भोक्ता नाहीं बनूं हौं, तातैं मेरे भोगे विनाही ते कर्म खिरि जावो । मै मेरे चैतन्यस्वरूप आत्मामैं लीन भया तिनिका देखने जाननेवालाही हौं ॥ इहां इतना विशेष और जानना जो, अविरतदशामे तथा देशविरत प्रमत्तसंयतदशामै तौ ऐसा ज्ञानश्रद्धान ही प्रधान है अर जब अप्रमत्तदशा होयकरि श्रेणी चढै है तब यह अनुभव साक्षात् होय है ।

निश्शेषकर्मफलसन्न्यसनान्ममैव सर्वक्रियांतरविहारनिवृत्तवृत्तेः ।
चैतन्यलक्ष्म भजतो भृशमात्मतत्त्वं कालावलीयमचलस्य वहत्वनंता ॥ ३८ ॥

सं० टी०—मम-मे, इयं प्रसिद्धा, कालावली-कालसमयपंक्तिः, अनंता-अनंतसमयावच्छिन्ना, वहतु-यातु, कीदृक्षस्य मे ? भृशं अत्यर्थं, आत्मतत्त्वं-स्वस्वरूपं, भजतः-आश्रयतः, कीदृशं ? चैतन्यलक्ष्म चैतन्यमेव लक्ष्म लक्षणं यस्य तत्, एवं-पूर्वोक्त प्रकारेण, निरित्यादिः-निश्शेषाणि-समस्तानि तानि च तानि कर्ममलानि च अज्ञानत्वशुभाशुभादीनि तेषां सं-सम्यक् प्रकारेण न्यसनं-परित्यजनं तस्मात्, पुनः किंभूतस्य मे ? सर्वेत्यादिः-स्वक्रियाया अन्या क्रिया क्रियांतरं सर्वस्मिन् क्रियांतरे विहारः विहरणं, तत्र निवृत्ता वृत्तिः प्रवर्तनं यस्य तस्य ॥ ३८ ॥ अथ कर्मफलभुक्ति भनक्ति—

अर्थ-सकलकर्मके फलका त्यागकरि ज्ञानचेतनाकी भावना करनेवाला ज्ञानी कहै है—जो, एवं कहिये पूर्वोक्त प्रकार सकल कर्मका फलका सन्न्यास करनेतै मैं कैसा हौं ? चैतन्य है लक्षण जाका ऐसा आत्मतत्त्व, ताही अतिशयकरि भोगवता हौं। अर इस सिवाय अन्य जो उपयोगकी तथा बाह्यली क्रिया, ताविषै विहार कहिये प्रवर्तना तातै रहित है वृत्ति जाकी ऐसा अचल हौं। सो मेरे यह कालकी आवली प्रवाहरूप अनंत है सो इसहीकूं भोगनेरूप जावो। उपयोगकी प्रवृत्ति अन्यविषै मति जावो। भावार्थ—ऐसी भावना करनेवाला ज्ञानी ऐसा तृप्त भया है, जो भावना करते मानूं साक्षात् केवली ही भया। सो ऐसा ही रहना अनंतकाल चाहै है। सो सत्य है। याही भावनातैं केवली होय है। केवलज्ञान उपजनेका परमार्थ उपाय यही है। बाह्य व्यवहार चरित्र है सो इसहीका साधनरूप है। अर इस विना व्यवहारचारित्र है सो शुभकर्मकूं बांधै है। मोक्षका उपाय नाही है। फेरि काव्य कहै हैं—

**यः पूर्वभावकृतकर्मविषद्रुमाणां भुंक्ते फलानि न खलु स्वत एव तृप्तः।**
**आपातकालरमणीयमुदर्करम्यं निष्कर्मशर्ममयमेति दशांतरं सः ॥ ३९ ॥**

सं० टी०—खलु-निश्चितं, यः पुमान् स्वत एव स्वस्वभावत एव, तृप्तः-संतृप्तः, पूर्वेत्यादिः-पूर्वभावैः-पूर्वोदयितविभावपरिणामैः कृतानि कर्माणि तान्येव विषद्रुमाः-विषवृक्षाः, तेषां फलानि-सुखदुःखादीनि, न भुंक्ते ततो भिन्नत्वेन तत्फलास्वादको न भवति। सः-योगी, दशांतरं-संसारावस्थातः अवस्थांतरं मोक्षं, एति प्राप्नोति। कीदृशं ? आपातेत्यादिः-आपातकाले तत्प्राप्तिकाले रमणीयं-मनोज्ञं, ननु प्राप्तिकाले भोगसुखवद्रमणीयं तदा नादरणीयमित्याकांक्षायां उदर्करम्यं-उदर्के-उत्तरकाले, रम्यं मनोज्ञं, निरित्यादि -निष्कर्म-कर्मातीतं तच्च तच्छर्म च तेन निर्वृत्तं, ॥ ३९ ॥ अथ प्रशमरसपानं पाययति—

अर्थ—जो पुरुष पूर्वे अज्ञानभावकरि कीये जे कर्म तेही भये विषके वृक्ष तिनिका फल उदय आया ताकूं ताका स्वामी होय न भोगवे है। अर निश्चयकरि अपने आत्मस्वरूपहीतै तृप्त है। अन्य किछू तृष्णा नाही करै है। सो पुरुष वर्तमानकालविषै तौ सुंदर रमनेयोग्य, अर आगामी कालविषै जाका फल सुंदर रमनेयोग्य ऐसा कर्मनितैं रहित स्वाधीनसुखमयी दशांतर कहिये ऐसी दशा संसार अवस्थामै पूर्वै कबहू न भई ऐसी अन्यस्वरूप दशाकूं प्राप्त होय है ॥ भावार्थ-इस ज्ञानचेतनाकी भावनाका यहु फल है। याके भावनातै अत्यंत तृप्त रहै है, अन्यतृष्णा न करै है। अर आगामी केवलज्ञान उपजाय सर्वकर्मनितै रहित मोक्ष-अवस्थाकूं प्राप्त होय है ॥ अब उपदेश करै है, जो, ऐसै कर्मचेतना अर कर्म-

फल चेतनाका त्यागकी भावनाकरि अज्ञानचेतनाका अभावकूं प्रकट नचाय ज्ञानचेतनाका स्वभावकूं पूर्ण करि, ताकूं नचावतैं संते ज्ञानी जन हैं ते सदाकाल आनंदरूप रहैं । इस अर्थके कलशरूप काव्य हैं—

अत्यंतं भावयित्वा विरतिमविरतं कर्मणस्तत्फलाच्च
प्रस्पष्टं नाटयित्वा प्रलयनमखिलाज्ञानसंचेतनायाः ।
पूर्णं कृत्वा स्वभावं स्वरसपरिगतं ज्ञानसंचेतनां स्वां
सानंदं नाटयंतः प्रशमरसमितः सर्वकालं पिबंतु ॥ ४० ॥

सं० टी०—इतः-कर्मतत्फलविरक्तिभजनादनंतरं, सर्वकालं-सर्वदा, प्रशमरसं साम्यपीयूषं, पिबंतु-आस्वादयंतु योगिनः । कीदृक्षास्ते ? स्वां स्वकीयां ज्ञानसंचेतना ज्ञानं मे ज्ञानस्याहमिति भावना सानंदं-हर्षोद्रेकं यथा भवति तथा नाटयंत-कुर्वंतः, किं कृत्वा ? स्वेत्यादिः-स्वस्य-आत्मनः, रसः, तत्र परिगतं प्राप्तं, स्वभावं स्वरूपं, पूर्णं संपूर्णं, कृत्वा विधाय तदपि किंकृत्वा ? प्रस्पष्टं व्यक्तं यथा भवति तथा अखिलेत्यादि-अखिला-समस्ता चासावज्ञानचेतना च कर्मचेतना कर्मफलचेतना च तस्याः प्रलयनं-विनाशनं नाटयित्वा विधाय, तदपि किंकृत्वा ? अविरतं-निरतरं, कर्मणः-ज्ञानावरणादेः,च पुन , तत्फलात्-तेषां कर्मणां फलात् रागद्वेषादेः, अत्यंतं निश्शेषं, विरतिं-विरक्तिं, भावयित्वा-संभाव्य-कृत्वेत्यर्थः ॥ ४० ॥ अथेतो ज्ञानं विवेचयति—

अर्थ—ज्ञानी जन हैं ते कर्मतै अर कर्मके फलतै अत्यंत विरक्तभावनाकूं निरंतर भाव करि, बहुरि समस्त अज्ञानचेतनाका नाशकूं स्पष्ट प्रगटपणैं नृत्य कराय अर अपना निजरसतै पाया स्वभावरूप जो ज्ञानचेतना ताकूं, आनंदसहित जैसैं होय तैसै पूर्ण करि नृत्य करावते संते इहांतै आगै प्रशमरस जो कर्मका अभावरूप आत्मिकरस अमृत ताही सदाकाल पीवो। यह ज्ञानी जननिकूं प्रेरणा है ॥ भावार्थ—यह पहलै तौ तीन कालसंबंधी कर्मका कर्तापणारूप कर्मचेतनाके गुणचास भंगरूप त्यागकी भावना कराई । पीछै एकसो अठतालीस कर्मप्रकृतिका उदयरूप कर्मका फलका त्यागकी भावना कराई । ऐसै अज्ञानचेतनाका प्रलय कराय अर ज्ञानचेतनामैं प्रवर्तनेका उपदेश कीया है । यह ज्ञानचेतना सदा आनंदरूप अपना स्वभावका अनुभवरूप है । ताकूं ज्ञानी जन सदा भोगवो । यह श्रीगुरुनिका उपदेश है ॥ आगैं यह सर्व विशुद्धज्ञानका अधिकार है सो ज्ञानकूं कर्ताभोक्तापणातैं भिन्न दिखाय अर अन्यद्रव्य अर अन्यद्रव्यनिके भाव तिनितै ज्ञानकूं न्यारा दिखावै हैं । ताकी सूचनिकाका काव्य है—

इत्तः पदार्थप्रथनावगुंठनात् विना कृतेरेकमनाकुलं ज्वलत् ।
समस्तवस्तुव्यतिरेकनिश्चयाद्विवेचितं ज्ञानमिहावतिष्ठते ॥ ४१ ॥

सं० टी०—इह-आत्मनि जगति वा, ज्ञानं बोधः, विवेचितं-भिन्नं, अवतिष्ठते-आस्ते, कुतः ? इतः-अस्मात्, पदार्थेत्यादि-पदार्थानां शास्त्रशब्दरूपरसगंधवर्णस्पर्शकर्मधर्माधर्मकालाकाशाध्यवसायादीनां प्रथनं-विस्तारः, तस्य अवगुंठनात् न श्रुतं ज्ञानं अचेतनत्वात् ततो ज्ञानश्रुतयोर्व्यतिरेकः एवं शब्दादिषु योज्यं, कृति-कारणं तस्य विना-अंतरेण क्रियाया अंतरेण स्वभावादित्यर्थः एकं-अद्वितीयं, पुनः कीदृक्षं ? अनाकुलं-आकुलतारहितं, पुनः ज्वलत्-देदीप्यमानं, कुतः ? समस्तेत्यादिः-समस्तानां निखिलानां, वस्तूनां-शास्त्रशब्दादीनां, व्यतिरेकः-भिन्नत्वं, ज्ञानान्यार्थयोर्भिन्नत्वं तस्य निश्चयः-निर्णयः, तस्मात् ॥ ४१ ॥ अथ ज्ञानस्य मध्याद्यंतराहित्यमर्हते—

अर्थ—इहांतै आगै इस ज्ञानके अधिकारविषैं समस्तवस्तुनितैं व्यतिरेक कहिये भिन्नका निश्चयतैं विवेचित कहिये न्यारा कीया जो ज्ञान सो अवस्थान करै है, निश्चल तिष्ठै है। कैसा हुवा तिष्ठै है ? पदार्थका जो प्रथना कहिये फैलना ताका अवगुंठन कहिये ज्ञेयज्ञानसंबंधकरि एकसे दीखना, तातै भई जो अनेकरूप कृति कहिये कर्तृत्वभावरूप क्रिया, ताविना एक ज्ञानक्रियामात्र सर्व आकुलतातै रहित दैदीप्यमान होता तिष्ठै है ॥ भावार्थ—सर्ववस्तुनितै न्यारा ज्ञानकूं प्रगट दिखावै हैं ।

अन्येभ्यो व्यतिरिक्तमात्मनियतं बिभ्रत्पृथग्वस्तुता—
मादानोज्झनशून्यमेतदमलं ज्ञानं तथावस्थितं ।
मध्याद्यंतविभागमुक्तसहजस्फारप्रभाभासुरः
शुद्धज्ञानघनो यथास्य महिमा नित्योदितस्तिष्ठति ॥ ४२ ॥

सं० टी०—तथा तेनैव प्रकारेण, एतत् प्रसिद्धं, ज्ञानं-बोधः, अवस्थितं-व्यवस्थित, कीदृक्षं ? अन्येभ्यः-सर्वपरद्रव्येभ्यः, व्यतिरिक्तं-भिन्नं, अनेनातिव्याप्तिः परिहृता, आत्मनियतं-सर्वदर्शनादिजीव स्वप्रतिष्ठं, अनेनाव्याप्तिः परिहृता ज्ञानस्य। पुनः पृथग्वस्तुतां-परपदार्थेभ्यो भिन्नस्वभावं परिच्छेदकलक्षणं बिभ्रत्-दधत् अनेन असंभवः परिहृतः। आदानोज्झनशून्यं-परवस्तुनः

आदानं ग्रहण त्यजनं च ताभ्यां शून्यं रहितं, अमलं कर्ममलातिक्रांतं तथा, कथं ? यथा अस्य-ज्ञानस्य नित्योदित:-नित्यमुदीयमान:-प्रकाशमान , महिमा माहात्म्यं तिष्ठति, कीदृक्ष सः ? मध्येत्यादि:-मध्यं च आदिश्च अंतश्च मध्याद्यंताः तेषा विभागः, भेदः, तैः मुक्ता रहिता सा चासौ सहजा स्वाभाविकी, स्फारा विस्तीर्णा, प्रभा दीप्तिश्च लक्षणया ज्ञायकत्वं तया भासुरः-प्रकाशनशील , पुनः कीदृश ? शुद्धेत्यादि शुद्धज्ञानेन घनः निरतर. ॥ ४२ ॥ अथात्मधारणामनुमोदते—

अर्थ–यह ज्ञान है सो तैसै अवस्थित भया है, जैसै, याका महिमा निरंतर उदयरूप तिष्ठै, प्रतिपक्षी कर्म न रहै ॥ कैसा अवस्थित भया है ? अन्य जे परद्रव्य तिनितैं व्यतिरिक्त कहिये न्यारा अवस्थित भया है । बहुरि कैसा है ? आत्मनियतं कहिये आपहीविषै निश्चित है । बहुरि कैसा है ? पृथक् कहिये न्याराही वस्तुपणाकूं धारता संता है । वस्तूका स्वरूप सामान्यविशेषात्मक है, सो ज्ञानभी सामान्यविशेषपणाकूं धार्‍या है । बहुरि कैसा है ? आदानोज्झन कहिये ग्रहणत्याग तिनिकरि शून्य है रहित है । ज्ञानमै किछू त्याग ग्रहण नाही है । बहुरि कैसा है ? अमल कहिये रागादिक मलतै रहित है ऐसा है । बहुरि याका महिमा नित्य उदयरूप तिष्ठै है सो कैसा है ? मध्य अर आदि अर अंत जे विभाग तिनिकरि मुक्त कहिये रहित, अर सहज कहिये स्वाभाविक, अर स्फार कहिये फैल्या विस्तर्‍या जो प्रभा कहिये प्रकाश ताकरि देदीप्यमान है । बहुरि शुद्धज्ञानका घन कहिये समूह है ऐसा जाका महिमा सदा उदयमान है । तैसै अवस्थित भया है ठहर्‍या है ॥ भावार्थ–ज्ञानका पूर्णरूप सर्वकूं जानना है । सो जब यह प्रकट होय है तब तिनि विशेषणनिसहित प्रकट होय है । सो याकी महिमाकूं कोई विगाडि सकै नाही सदा उदयमान रहै है ॥ अब कहै हैं. ऐसे ज्ञानस्वरूप आत्माका धारणा सोही कृतकृत्यपणा है–

उन्मुक्तमुन्मोच्यमशेषतस्तत्तथात्तमादेयमशेषतस्तत् ।
यदात्मनः संहृतसर्वशक्तेः पूर्णस्य संधारणमात्मनीह ॥ ४३ ॥

सं० टी०—इह अस्मिन् आत्मनि चिद्रूपे, आत्मन:-ज्ञानस्वरूपस्य, तत् प्रसिद्धं, संधारणं-धारणं, एकाग्रताप्रापणं । कीदृशस्य ? संहृतेत्यादि:-संहृता निवारिता, सर्वा कर्मोपाधिजा शक्तिः सामर्थ्यं येन तस्य, पूर्णस्य-संपूर्णज्ञानशक्तिविशिष्टस्य तत् यत् संधारणं तदेव अशेषत:-सामस्त्येन, उन्मोच्यं उन्मोक्तुं त्यक्तुं योग्यं, शरीरादि उन्मुक्तं-त्यक्तं, तथा-येन प्रकारेण सर्वं त्यक्तं तेनैव प्रकारेण तत् आत्मसंधारणं, अशेषतः आदेयं-गृहीतुं योग्यं दर्शनज्ञानादि आत्तं-गृहीतं, आत्मनउपादानमेव हेयोपादेययोः परित्यागग्रहणमित्यभिप्रायः ॥ ४३ ॥ अथास्यानाहारकत्वं शंक्यते—

अर्थ–जो समेटी है सर्व शक्ति जानैं ऐसा जो पूर्णस्वरूप आत्मा, ताका आत्महीविषै धारण करना सो धारण किया अर उन्मोच्य कहिये जो छोडनेयोग्य था, सो तौ सर्व उन्मुक्त कहिये छोड्या ॥ अर जो आदेय कहिये लेनेयोग्य था, सो समस्त लीया ॥ भावार्थ–जो पूर्णज्ञानस्वरूप सर्वशक्तीका समूहस्वरूप आत्मा, ताकूं धारणा सोही धारण किया अवर त्यागने योग्य तौ सर्वही त्यागा। अर ग्रहण करनेयोग्य था सो ग्रहण कीया। यह ही कृतकृत्यपणा है ॥ आगै कहै हैं, जो, ऐसे ज्ञानकै देहभी नाही है ताकी सूचनिकाका श्लोक है–

**व्यतिरिक्तं परद्रव्यादेवं ज्ञानमवस्थितं ।**
**कथमाहारकं तत्स्याद्येन देहोऽस्य शंक्यते ॥ ४४ ॥**

सं० टी०—तत्-ज्ञानं, आहारक आहार्यवस्तुग्राहकं, कथं स्यात्? केन प्रकारेण स्यात्? न केनापि, तस्यामूर्तत्वात् आहारकस्य मूर्तत्वात्। तत् किं? यत्-ज्ञानं, एवं-अन्येभ्य इत्यादि पूर्वोक्तयुक्त्या, परद्रव्यात् व्यतिरिक्तं भिन्नं, अवस्थितं सुप्रतिष्ठं। अस्य ज्ञानस्य, देहः-शरीर येन कथं शंक्यते-आरेक्यते संभाव्यते? न कथमपि अस्यानाहारकत्वात् ॥४४॥ अथालिंगमालिंग्यते–

भावार्थ–एवं कहिये पूर्वोक्तप्रकार परद्रव्यतैं न्यारा ज्ञान अवस्थित भया ठहऱ्या ॥ सो ऐसा ज्ञान आहारक कहिये कर्मनोकर्मरूप आहार करनेवाला कैसा होय? अर जब आहारक नाही तब याके देहकी शंका कैसी करिये? नाही करिये ॥

**एवं ज्ञानस्य शुद्धस्य देह एव न विद्यते ।**
**ततो देहमयं ज्ञातुर्न लिंगं मोक्षकारणं ॥ ४५ ॥**

सं० टी०—एवं-मूर्तत्वामूर्तत्वप्रकारेण यत शुद्धस्य निष्कलमपस्य ज्ञानस्य, देह एव निश्चयेन न विद्यते-नास्ति, ततः-तस्माद्देहाभावात् ज्ञातुः-ज्ञायकस्य. पुंसः लिंगं पाषंडिलिंगं गृहिलिंगं वा न मोक्षकारणं-न मुक्तेर्मार्गः, हेतुगर्भितविशेषणमाह-देहमयं देहनिवृत्तं, यदि देहः स्वकीयो न तर्हि तदाश्रितं लिंगं स्वकीयं कथं स्यात् ॥ ४५ ॥ तर्हि को मोक्षमार्गः? इति चेत्

अर्थ–एवं कहिये पूर्वोक्तप्रकारकरि शुद्धज्ञानकै देहही नाही विद्यमान है। तातै ज्ञाताकै देहमयी लिंग है, चिन्ह है, भेष है सो मोक्षका कारण नाही है ॥

**दर्शनज्ञानचारित्रत्रयात्मा तत्त्वमात्मनः ।**

एक एव सदा सेव्यो मोक्षमार्गो मुमुक्षुणा ॥ ४६ ॥

सं० टी०—मुमुक्षुणा मोक्तुमिच्छुना पुंसा, एक एव जिनोपदिष्ट एव न मिथ्योपकल्पित, मोक्षमार्गः, मोक्षसाधनोपायः सदा-नित्यं, सेव्य आश्रयणीयः, कीदृक्षः ? दर्शनेत्यादिः स्वश्रद्धान-स्वज्ञान-स्वचरणत्रयस्वरूपः, एतत्त्रयमंतरेण तस्यानुपलब्धेः, पुनः आत्मनः तत्त्वं स्वरूपं, दर्शनादित्रयमंतरेणात्मस्वरूपाभावात् मोक्षमार्गस्य दर्शनादित्रयात्मकत्वात् च ॥ ४६ ॥ अथ तमेव मोक्षमार्गं मार्गयति—

अर्थ--जातै आत्माका तत्त्व कहिये यथार्थरूप दर्शनज्ञानचारित्रका त्रिकस्वरूप है तातै मोक्षके इच्छक पुरुषनिकरि एकही यह मोक्षमार्ग सदा सेवनेयोग्य है ॥

एको मोक्षपथो य एष नियतो दृग्ज्ञप्तिवृत्त्यात्मक-
स्तत्रैव स्थितिमेति यस्तमनिशं ध्यायेच्च तं चेतति ।
तस्मिन्नेव निरंतरं विहरति द्रव्यांतराण्यस्पृशन्
सोऽवश्यं समयस्य सारमचिरान्नित्योदयं विंदति ॥ ४७ ॥

सं० टी०—यः-सर्वजनप्रसिद्ध, मोक्षमार्ग नानामिथ्यामतिविजृंभित., अनेकता दधानोऽपि स एषः मोक्षपथः, दृगित्यादि. दर्शनज्ञानचारित्रत्रयात्मकः सन्, एक न त्वनेकधा नियतः अनेकप्रमाणनयोपन्यासैर्निश्चितः, यः-पुमान्, तत्रैव-मोक्षपथे दर्शनादिरूपे, स्थितिं-निश्चलतां स्वात्मनः, एति-प्राप्नोति, च-पुनः, अनिशं-निरतर- तं रत्नत्रयरूपं मोक्षपथं एकाग्रो भूत्वा, ध्यायेत्-ध्यानविषयीकुर्यात्, पुनः य. तं मोक्षपथं, सकलकर्मफलचेतनासन्यासेन शुद्धज्ञानचेतनामयीभूत्वा चेतति-मुहुर्मुहुरनुभवति निरतर-प्रतिक्षणं, तस्मिन्नेव दर्शनादित्रयात्मके मोक्षपथे, विहरति-अनुचरति । कीदृक्षः सन् ? द्रव्यांतराणि-परद्रव्याणि, अस्पृशन्-अनाश्रयन् मनागपि स्वकीयान्यकुर्वन्, सः-पुमान्, अचिरात्-शीघ्रं, तद्भवे तृतीयभवादौ वा अवश्यं-नियमतः, समयस्य-पदार्थस्य-सिद्धांतशासनस्य वा सारं-परमात्मानं टंकोत्कीर्णस्वभावं विंदति लभते, साक्षात् परमात्मा भवतीति यावत् कीदृशं ? नित्योदयं-नित्यमुदीयमानं ॥ ४७ ॥ अथ लिंगस्य वैयर्थ्यं सार्थयति—

अर्थ—जो दर्शनज्ञानचारित्रस्वरूप यह एक मोक्षका मार्ग है सो जो पुरुष तिसही विषै स्थितीकूं प्राप्त होय है तिष्ठै

है, बहुरि जो तिसहीकूं निरंतर ध्यावै है, बहुरि जो तिसहीकू चेतै है, अनुभवै है, बहुरि जो तिसहीविषैं निरंतर विहार करै है प्रवर्तै है, कैसा भया संता ? अन्यद्रव्यनिकूं नाही स्पर्शता संता, सो पुरुष थोरेही कालमें अवश्य समयसार जो परमात्माका रूप जाका नित्य उदय रहै ऐसा अनुभवै है पावै है। भावार्थ–निश्चयमोक्षमार्गके सेवनतै थोरेही कालमें मोक्षकी प्राप्ति होय यह नियम है ॥ आगै कहै हैं, जो द्रव्यलिंगहीकू मोक्षमार्ग मानि ता विषैं ममत्वभाव राखै हैं ते मोक्ष नाही पावै हैं। ताकी सूचनिकाका काव्य है–

ये त्वेनं परिहृत्य संवृतिपथप्रस्थापितेनात्मना
लिंगे द्रव्यमये वहंति ममतां तत्त्वाववोधच्युताः।
नित्योद्योतमखंडमेकमतुलालोकं स्वभावप्रभा-
प्राग्भारं समयस्य सारममलं नाद्यापि पश्यंति ते ॥ ४८ ॥

सं० टी०- ते-पुरुषा , अद्यापि इदनीमपि, साक्षात्स्वरूपप्रकाशनावसरेऽपि, समयस्य सार-आत्मानं, न पश्यंति-नेक्षंते, कीदक्षं नित्योद्योतं-सदा प्रकाशमानं, अखंडं-संपूर्ण, एकं कर्मद्वैतरहितं, अतुलालोकं-अनुपमेयप्रकाशं, तत्प्रकाशसदृशस्यापरस्याभावात्, स्वेत्यादि'-स्व एव भावः-पदार्थः, तस्य प्रभा ज्ञानं, अथवा स्वभावज्ञानस्य प्रभा-द्योतकत्वं तया प्राग्भार-पूर्व भृतं, अमलं निर्मल, ते के ? ये पुरुषा आत्मना कृत्वा द्रव्यमये नाग्न्यत्रिदंडिप्रमुखद्रव्यनिर्मापिते लिंगे-वेषे, ममता 'अहं श्रमणः, अहं श्रमणोपासकश्च इति ममत्व वहंति- कुर्वंति, कीदक्षा ? ये तत्त्वेत्यादि -तत्त्वस्य वस्तुयाथात्म्यस्य, अववोधः-परिज्ञानं, तेन च्युताः, कीदृशेनात्मना ? समित्यादिः संवृतिपथे कल्पनापथे, प्रस्थापितेन आरोपितेन, किंकृत्वा ? एनं-दर्शनज्ञानचारित्रलक्षणं भावलिंगं परिहृत्य-मुक्त्वा, इतस्ततो द्रव्यलिंगे प्रवृत्तस्य न मुक्तिरित्यभिप्रायः ॥ ४८ ॥ अथ व्यवहारं विमूढयति—

अर्थ–जे पुरुष यह पूर्वोक्त परमार्थस्वरूप मोक्षमार्ग ताकूं छोडिकरि अर व्यवहार मार्गविषै वलाया स्थाप्या जो अपना आत्मा ताहीकरि, द्रव्यमय जो यह वाह्यलिंग भेष ताविषै ममता करै हैं; जानै हैं, कि यह ही हमकूं मोक्ष प्राप्त करेगा; ते पुरुष तत्त्वके यथार्थ ज्ञानतै रहित भये संते मुनिपद लिया है तौऊ इस समयसारकूं नाही अवलोकन करै हैं, नाही पावै है। कैसा है समयसार ? नित्य है उदय जाका, कोई प्रतिपक्षी होय ताका उदयका विच्छेद न करि-

सकै है । बहुरि कैसा है ? अखंड है, जामैं अन्य ज्ञेय आदिके निमित्ततै खंड नाही होय है। बहुरि कैसा है ? एक है पर्यायनिकरि अनेक अवस्था होय हैं, तौऊ एकरूपपणाकूं नाही छोडै है । बहुरि कैसा है ? अतुल कहिये जाकै बराबरी अन्य नाही ऐसा है आलोक कहिये प्रकाश जाका, सूर्यादिकका प्रकाशकी ज्ञानप्रकाशकूं उपमा नाही लागै । बहुरि अपने स्वभावकी जो प्रभा ताका प्राग्भार है, जाका भार अन्य सहारी सकै नाही । बहुरि अमल है, रागादिक विकारमलकरि रहित है । ऐसा परमात्माका स्वरूपकूं द्रव्यलिंगी नाही पावै है ॥

व्यवहारविमूढदृष्टयः परमार्थं कलयंति नो जनाः ।
तुषबोधविमुग्धबुद्धयः कलयंतीह तुषं न तंडुलं ॥ ४९ ॥

सं० टी०—व्यवेत्यादिः-व्यवहारेण श्रमणश्रमणोपासकलक्षणद्विविधेन लिंगेन मोक्षमार्गः इति स्वरूपेण विमूढा-मोहिता दृष्टिर्येषां ते, जना लोका परमार्थ-निश्चयं, न कलयंति-न प्राप्नुवंति-न जानंति वा तस्य स्वयमशुद्धद्रव्यानुभवनात्मकत्वे सति परमार्थत्वाभावात् । अत्र दृष्टांतोपन्यासः-इह-जगति, तुषेत्यादिः-तुषबोधः-तंडुलाच्छादकत्वज्ञानं तेन विमुग्धा सर्वमिदं तुषमेवेति विमुग्धा-विमोहिता बुद्धिर्येषां ते जनाः तुषं-तंडुलाच्छादिका त्वचं कलयंति-जानंति पुनस्तत्र स्थितं तंडुलं-अक्षतं न जानंति तत्र तस्य परिज्ञानाभावात् वैतालीयनाम छंदः ।

षट् विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरंतराः । न समात्र पराश्रिता कला वैतालीये रलौ गुरुः ॥ १ ॥

इति छंद उक्तलक्षणसद्भावात् ॥ ४९ ॥ द्रव्यलिंगिना कुतः स्वरूपाप्राप्तिः ? इति चेत्—

अर्थ—जे जन व्यवहारहीविषै विमूढ मोही है बुद्धि जिनिकी ऐसे हैं ते परमार्थकूं नाही जानै हैं । जैसैं लोकविषै जे तुसहीके ज्ञानविषैं विमुग्धबुद्धि जन हैं ते तुसहीकूं तंदुल जानै हैं अर तंदुलकूं तंदुल नाही जानै हैं ॥ भावार्थ—जे परमार्थ आत्माका स्वरूप नाही जानै हैं अर व्यवहारविषै मूढ होय रहे हैं शरीरादि परद्रव्यहीकूं आत्मा जानै हैं ते परमार्थ आत्माकूं नाही जानै हैं । जैसैं तुष तंडुलका भेद तौ जानै नाही अर परालकूं कूंटै तिनिकैं तंडुलकी प्राप्ति नही। तुस तंडुलका भेदज्ञान भये संते तंडुल पावै । आगै इसही अर्थकूं दृढ करनेकूं कहै हैं—

द्रव्यलिंगममकारमीलितैर्दृश्यते समयसार एव न ।

कुतः ? नियतं-निश्चितं, सर्वं-समस्तं, मरणजीवितदुःखसौख्यं सदैव-संसारदशायां, भवति-जायते स्वेत्यादिः स्वकीयस्यात्मोपार्जितस्य कर्मण उदयात् आयुःक्षयेण जीवाना मरणं, सत्यायुषि जीवितव्यं, आयुर्हरणाभवात् कथं तत्परेण कृतं । शुभाशुभकर्मोदयात् सुखदुःखिता जीवा भवंति तत्कर्मदानाभावात् कथं ते तादृशाः कृताः परेणेति भावः ॥ ६ ॥

अर्थ—इस लोकमें जीवनिके मरण जीवित दुःख सुख हैं ते सर्वेही सदा काल नियमतै अपने अपने कर्मके उदयतै होय हैं ॥ बहुरि जो परपुरुष हैं सो परके मरण जीवित दुःख सुख करै हैं यह मानना है सो अज्ञान है ॥ फेरि इसही अर्थकूं दृढ करते संते अगिले कथनकी सूचनिकारूप काव्य कहैं हैं ॥

अज्ञानमेतदधिगम्य परात्परस्य पश्यंति ये मरणजीवितदुःखसौख्यं ।
कर्माण्यहंकृतिरसेन चिकीर्षवस्ते मिथ्यादृशो नियतमात्महनो भवंति ॥ ७ ॥

सं० टी०—ते-पुरुषाः, नियतं-निश्चितं, मिथ्यादृशः-मिथ्यादृष्टयः, भवंति-जायंते, किंभूताः ? आत्महनः आत्मानं हंतीति आत्महनः स्वरूपघातकाः स्वस्वरूपाद्विपर्यस्तत्वात् पुनः कर्माणि-शुभाशुभानि, चिकीर्षवः-स्वसात्कर्तुमिच्छवः, केन ? अहंकृतिरसेन मयायं हतो जीवितश्चेत्यादिरूपेणाहंकाररसेन, ते के ? ये-नराः, परात्-भिन्नात्, परस्य-ततोन्यस्य, पश्यंति-ईक्षंते, किं ? मरणजीवितदुःखसौख्यं, किं कृत्वा ? एतत्-पूर्वोक्तं, मयायं हत इत्यादिरूपमज्ञानं, अधिगम्य-प्राप्य ॥ ७ ॥ अथाध्यवसायस्य बंधहेतुत्वं पापठ्यते—

अर्थ—यह पूर्वोक्त मानना अज्ञान है, ताही प्राप्त होयकरि जे पुरुष परतैं परकै मरण जीवित दुःख सुख होना देखै हैं, मानै हैं, ते पुरुष "मै इनि कर्मनिकूं करूं हूं" ऐसा अहकाररूप रसकरि कर्मनिकूं करनेके इच्छक हैं, कर्म करनेकी मारने जीवावनेकी सुखी दुःखी करनेकी वांछा करै हैं, ते नियमकरि मिथ्यादृष्टि हैं । आपहीकरि अपना घात जिनिकै पाड्ये है ऐसे हैं ॥ भावार्थ—जे परकूं मारने जीवावनेका तथा सुख दुःख करनेका अभिप्राय करै हैं, ते मिथ्यदृष्टि हैं । अर अपना स्वरूपतै च्युत भये रागी द्वेषी मोही होय आपहीकरि आपका घात करै हैं, तातै हिंसक हैं ॥

मिथ्यादृष्टेः स एवास्य बंधहेतुर्विपर्ययात् ।
य एवाध्यवसायोयमज्ञानात्मास्य दृश्यते ॥ ८ ॥

सं० टी० -अस्य मिथ्यादृष्टे, य एव प्रसिद्धः अध्यवसायः अहं परान् हन्मीत्यादिरूपः परिणामः स एव अध्यावसाय एव,

वंधहेतुः कर्मवंधकारणं, कुतः ? विपर्ययात् ज्ञानाद्विपर्ययस्वभावत्वात् अस्य मिथ्यादृशोऽध्यवसायः वंधहेतुः कथं ? यतः-अयं
अध्यवसायः अज्ञानात्मा-अज्ञानमेव आत्मा स्वरूप यस्य सः, दृश्यते-अवलोक्यते ॥ ८ ॥ अथाध्यवसायमाहात्म्यमारभते—

अर्थ—मिथ्यादृष्टीका जो यह अध्यवसाय है जो अज्ञानरूप प्रत्यक्ष दीखै है, सोही यह अभिप्राय मिथ्या विपर्यय-
स्वरूप है तातैं वंधका कारण है। भावार्थ—झूठा अभिप्राय सो मिथ्यात्व है सोही वंधका कारण है ऐसैं जानना ॥

अनेनाध्यवसानेन निष्फलेन विमोहितः।
तत्किंचनापि नैवास्ति नात्मात्मानं करोति यत् ॥ ९ ॥

सं० टी०—एव-निश्चयेन, तत्-वस्तु, किंचनापि-किमपि, महदल्पं वा नास्ति-न विद्यते, यत् आत्मा-जीवः, आत्मानं
स्वकीयं अध्यवसायेनैव न करोति-न विधत्ते, किंभूतः ? अनेन हन्मीत्यादिरूपेण, पूर्वोक्तेन अध्यवसानेन कपायाध्यवसायेन,
विमोहितः-मोहं प्राप्तः, किंभूतेन ? निष्फलेन वंधमोक्षलक्षणफलरहितेन, जीवस्य सरागवीतरागयोः स्वपरिणामयोः सद्भावे वंध-
मोक्षसद्भावात् तदभावे तयोरभावात् अतस्तयोरेव स्वार्थक्रियाकारित्वं, अनाध्यवसायस्याकिंचित्करत्वात् ॥ ९ ॥ अथ
तथाप्यध्यवसायं वीभत्सते—

अर्थ—आत्मा है सो इस निष्फल निरर्थक अध्यवसायकरि मोह्या हुआ आपकूं अनेकरूप करै है। सो ऐसा पदार्थ
कोई जगतमें नाही है-जिसरूप आपकूं नाही करै, सर्वहीरूप करै है। भावार्थ—यह आत्मा मिथ्या अभिप्रायकरि भूल्या
हुवा चतुर्गतिसंसारमें जेती अवस्था हैं, जेते पदार्थ हैं, तिनि सर्वस्वरूप आपकूं भया मानै है। अपना शुद्धस्वरूपकूं
नाही पहिचानै है ॥

विश्वाद्विभक्तोऽपि हि यत्प्रभावादात्मानमात्मा विदधाति विश्वं।
मोहैककंदोऽध्यवसाय एष नास्तीह येषां यतयस्त एव ॥ १० ॥

सं० टी०—इह-जगति, त एव प्रसिद्धाः, यतयः यतंते कर्मादीनीति यतयः-मुनयः, येषां यतीनां, एषः इदानीमुक्तः, अध्यवसायो
नास्ति, किंभूतः मोहैककंदः मोहस्य रागद्वेषस्य एकः-अद्वितीयः, कंदः मूलकारणं यः सः, मोहनीयकर्मोत्पादकत्वात्, हीति-
स्फुटं, यत्प्रभावात् यस्य अध्यवसायस्य, प्रभावः माहात्म्यं तस्मात् विश्वं चेतनाचेतनं लोकालोकं शुभाशुभं-चराचरं आ-
त्मानं- स्वकीयं, करोति-विधत्ते यथा हिंसाध्यवसायात् हिंसक तथा विपच्यमाननारकतिर्यग्मनुष्यदेवपुण्यपापाध्यवसायात्

रकं तिर्यंचं मनुष्यं देवं पुण्यं पापं चात्मानं करोति, किंभूतः? विश्वात्-चेतनाचेतनादिपदार्थात् विभक्तोऽपि भिन्नोऽपि तदध्यवसायवशात्तन्मयो भवति। विश्वशब्दस्य त्रिलोकार्थवाचकत्वाभावात् चेतनादिपदार्थवाचकत्वाच्च न सर्वादिगणत्व ॥ १० ॥ अथाध्यवसायस्य व्यावहारिकत्व व्यवहरति—

अर्थ—यह आत्मा समस्तद्रव्यनितैं भिन्न है, तौऊ जिस अध्यवसायके प्रभावतैं आपकूं समस्तस्वरूप करै है, सो यह अध्यवसाय कैसा है? मोह है एक कंद जाका। सो यह अध्यवसाय जिनिकै नाही है, ते यति हैं मुनि हैं।

सर्वत्राध्यवसानमेवमखिलं त्याज्यं यदुक्तं जिनै—
स्तन्मन्ये व्यवहार एव निखिलोप्यन्याश्रयस्त्याजितः।
सम्यङ्निश्चयमेकमेव तदमी निष्कंपमाक्रम्य किं
शुद्धज्ञानघने महिम्नि न निजे बध्नंति संतो धृतिं ॥ ११ ॥

सं० टी०—जिनैः-केवलज्ञानिभिः, उक्त प्रतिपादितं, किं? सर्वत्र-निखिलपरवस्तुनि यत् अखिलं-समस्तमेव, अध्यवसानं व्यवसायः, त्याज्यं-त्यजनीयं, तत्-व्यवसायहापनं, मन्ये-अहं जाने, निखिलोऽपि-समस्तोऽपि, व्यवहार एव-व्यवहारनय एव त्याजितः, हेतुगर्भितविशेषणमाह-अन्याश्रयः-पराश्रितः निश्चयनयेन पराश्रितमध्यवसायं बंधहेतुत्वेन मुमुक्षोः प्रतिषेधयता व्यवहारनय एव प्रतिषिद्धः, तस्यापि पराश्रितत्वाविशेषात् तत्-तर्हि किंकर्तव्यं? अमी-एते, संतः-सत्पुरुषाः, निजे-आत्मीये, महिम्नि-माहात्म्ये, धृतिं-संतोषं, स्थिरता वा, किं किमु न बध्नंति? अपि तु कुर्वंतीत्यर्थः? किंभूते? शुद्धज्ञानघने-कर्ममलकलंकरहितबोधनिरंतरे, किं कृत्वा? आक्रम्य-संप्राप्य, किं? एक अन्यनिरपेक्षं, एव-निश्चयेन, सम्यग्निश्चयं-शुद्धनिश्चयनयं किंभूतं? निष्कंप अचलं, स्वरूपे स्थिरत्वात् ॥ ११ ॥ अथ रागादीनां किंकारणं? इति साक्षेपं प्रश्नोत्तर-पद्यद्वयेन निर्मिमीते-

अर्थ—सर्वही वस्तुनिविषै जो समस्त अध्यवसान हैं उनकूं जिन भगवान् त्यागने योग्य कह्या है। सो आचार्य कहै हैं, हम ऐसै मानै हैं "जो परके आश्रय प्रवर्तता जो व्यवहार सो सर्वही छुडाया है" तातैं हम उपदेश करै हैं-जो सत्पुरुष हैं, ते सम्यक्प्रकार एक निश्चयहीकूं निष्कम्प जैसैं होय तैसैं निश्चल अंगीकार करिकै अर शुद्धज्ञानघनस्वरूप अपना महिमा आतमस्वरूप, ता विषै थिरता क्यों नाही धारै हैं? भावार्थ—जिनेश्वर देव अन्यपदार्थनिविषै आतमबुद्धिरूप अध्यवसान छुडाया है, सो यह पराश्रित सर्वही व्यवहार छुडाया है ऐसै जानूं, तातै शुद्धज्ञानस्वरूप अपना आत्मा, ता-

विषैं थिरता राखियो, ऐसा शुद्धनिश्चयका ग्रहणका उपदेश है। आचार्य आश्चर्य भी किया है-जो भगवान् अध्यवसानकूं छुडाया, तौ अव सत्पुरुष याकूं छोडि अपने स्वरूपविषैं क्यों नाही तिष्ठै हैं? यह हमारे अचिरज है।

रागादयो वंधनिदानमुक्तास्ते शुद्धचिन्मात्रमहोऽतिरिक्ताः।
आत्मा परो वा किमु तन्निमित्तमिति प्रणुन्ना पुनरेवमाहुः ॥ १२ ॥

सं० टी०—इति-साक्षेपं, प्रणुन्ना' शुद्धनयावलंबिन' पृष्टाः संतः, पुनः-भूयः, एवं अग्रे वक्ष्यमाणं, परं उत्तरं, आहु-कथयंति, इति किं? ते प्रसिद्धा, रागादयः-रागद्वेषमोहाः वंधनिदानं-कर्मवंधकारणं, उक्ताः-प्रतिपादिताः, किंभूतास्ते? शुद्धेत्यादिः-शुद्धचिदेव मात्रा प्रमाणं यस्य तत् तच्च तन्महः परज्योति, तेन तस्माद्वा, अतिरिक्ता-भिन्नाः, तन्निमित्तं-रागादीनां निमित्तं-उत्पादकारणं, किमु-अहो, आत्मा-चेतन, रागादीनामुत्पादकः, वा परः पुद्गल, तद्धेतुः इत्युक्ते आहु—

अर्थ—इहां शिष्य फेरि पूछै है, जो रागादिक हैं, ते तौ बंधके कारण कहे, बहुरि ते शुद्धचैतन्यमात्र मह जो आत्मा तातैं अतिरिक्त कहिये भिन्न कहैं-न्यारे कहै, तहां तिनिके होनेमें आत्मा निमित्त है, कि पर कोई निमित्त है? ऐसैं प्रेरे हुये आचार्य फेरि आगाने याका उत्तर दृष्टांतपूर्वक कहै हैं—

न जातु रागादिनिमित्तभावमात्मात्मनो याति यथार्ककांतः।
तस्मिन्निमित्तं परसंग एव वस्तुस्वभावोयमुदेति तावत् ॥ १३ ॥

सं० टी०—जातु-कदाचित्, आत्मा-चिद्रूपः, आत्मन-स्वस्य, रागेत्यादि-रागादीनां-रागद्वेषमोहानां, निमित्तभावं-उपादानकारणत्वं, न याति-न प्राप्नोति तर्हि तन्निमित्तं किं? तस्मिन्, आत्मनि परसंगः-परेषां-पुद्गलादीनां, संग-संयोगः, एव निश्चयेन, तन्निमित्तं-तेषां-रागादीनां निमित्तं कारणं इममेवार्थमुपमीयते अर्ककांतः-स्फटिकोपलः- यथा-इव, तथाहि-यथा स्फटिकोपलः परिणामस्वभावत्वे सत्यपि स्वस्य शुद्धस्वभावत्वेन रागादिनिमित्तत्वाभावात् स्वयं न परिणमते परद्रव्येणैव रागादिनिमित्तभूतेन स्वस्वरूपात्प्रच्याव्य रागादिभिः परिणम्यते तथा केवल- आत्मा परिणामस्वभावत्वे सत्यपि रागादिनिमित्तत्वाभावात् स्वयं न परिणमते परद्रव्यैणैव 'तन्निमित्तभूतेन स्वस्वरूपात्प्रच्याव्य तैः परिणम्यते इति तावत्-प्रथमं, अयं,-पूर्वोक्त एव, वस्तुस्वभाव-समस्तं वस्तुस्वरूपं, उदेति-उदयं गच्छति ॥ १३ ॥ अथ ज्ञानिनस्तदकर्तृकत्वमुद्भावति—

अर्थ—आत्मा है सो आपके रागादिकका निमित्तभावकूं कदाचित न प्राप्त होय है, तिस आत्माविषै रागादिकका निमित्त परद्रव्यका संगही है, इहां सूर्यकांतमणिका दृष्टांत है-जैसै सूर्यकांतमणि आपही तौ अग्निरूप नाहीं परिणमै है, तिसविषै सूर्यका विंब अग्निरूप होनेकू निमित्त है, तैसै जानना । यह वस्तूका स्वभाव उदयकू प्राप्त है काहूका किया नाही है ॥ आगै कहै हैं, जो ऐसा वस्तुका स्वभावकू जानता संता ज्ञानी रागादिककू आपके नाही करै है ऐसा सूचनिकाका श्लोक है—

इति वस्तुस्वभावं स्वं ज्ञानी जानाति तेन सः ।
रागादीन्नात्मनः कुर्यान्नातो भवति कारकः ॥ १४ ॥

सं० टी०—इति पूर्वोक्तप्रकारेण, ज्ञानी-पुमान्, स्वं-आत्मीयं, वस्तुस्वभावं रागादिव्यतिरिक्तं स्ववस्तुस्वरूप, जानाति-वेत्ति येन कारणेन वेत्ति तेनेव कारणेन, सः-ज्ञानी, रागादीन् आत्मनः-स्वस्य, न कुर्यात् स्ववसात् न करोति ? यतः, अतः कारकः कर्मणा कर्ता न भवति ॥ १४ अथाज्ञानं स्फूर्जेति—

अर्थ—जैसै अपने वस्तुभावकं ज्ञानी है सो जानै है, तिस कारणकरि सो ज्ञानी रागादिककूं आपकै नाही करै है, तातै रागादिकका कारक नाही है ॥

इति वस्तुस्वभावं स्वं नाज्ञानी वेत्ति तेन सः ।
रागादीन्नात्मनः कुर्यादतो भवति कारकः ॥ १५ ॥

सं० टी०—इदं पद्यं पूर्वतो विपर्यस्तं व्याख्येयं सुगमं च ॥ १५ ॥ अथ परद्रव्यमुद्धर्तुकामं समभिप्रैति—

अर्थ—अज्ञानी है सो, ऐसा अपना वस्तुभावकूं नाही जानै है, तिस कारणकरि सो अज्ञानी रागादिकभावनिकूं आपक करै है, यातै तिनिका कारक होय है ॥

इत्यालोच्य विवेच्य तत्किल परद्रव्यं समग्रं बलात्तन्मूलां बहुभावसंततिमिमामुद्धर्तुकामः समं ।
आत्मानं समुपैति निर्भरवहत्पूर्णैकसंविद्युतं येनोन्मूलितबंध एष भगवानात्मात्मनि स्फूर्जति ॥१६॥

सं० टी०—एषः-सः-आत्मा-चिद्रूपः कर्ता, आत्मनि-स्वस्वरूपे अधिकरणभूते:, स्फूर्जति-गर्जति-प्रकटीभवति वा, किंभूतः ?

उन्मूलितबंधः-उन्मूलितः-निराकृतो बंधो येन सः, पुनः भगवान् ज्ञानवान्, पुनः कीदृक्षः? बलात्-ध्यानादिलक्षणात् हठात्, इमां-प्रसिद्धां बह्वित्यादिः-बहूनां भावाना-विभावपरिणामानां संततिः परंपरा तां, रागद्वेषमोहपरंपरामित्यर्थः, समं-युगपत्, उद्धर्तुकामः उद्धर्तु-निराकर्तु, कामः-वाछा, यस्य सः, कुतः? स्वसात् इत्यनुक्तमप्यपादानं ज्ञेयं, किंभूतां? तन्मूलां-तदेव-परद्रव्यमेव तस्यैव वा मूलं-कारणं या ता, स कः? येन-ज्ञानरूपेण-करणभूतेन, आत्मानं-कर्मतापन्नं समुपैति-प्राप्नोति, किंभूतं तं? निर्भरेत्यादि- निर्भरेण-अतिशयेन, वहंती समस्तवस्तुग्रहणाय प्रवर्तमाना सा चासौ पूर्णा-अखंडा सा चासावेका संवित्-ज्ञानं तया युतं-संयुतं, किं-कृत्वा? किलेति निश्चितं, तत्-प्रसिद्धं, समग्रं-निखिलं, परद्रव्यं कस्येत्याकाक्षायां स्वस्येति संबंधोऽनुक्तोऽप्यूह्य., विवेच्य-पृथक्कृत्य, किंकृत्वा? इति-पूर्वोक्तप्रकारेण आलोच्य-सम्यग्विचार्य किमर्थं? स्वस्मै, इत्यप्यत्र ज्ञेयं ॥ १६ ॥ अथ रागादीनां दारकत्वं दिशति—

अर्थ—जो ऐसै परद्रव्यके अर अपने भावके निमित्तनैमित्तिकपणा विचारिकरि, तिस परद्रव्यसमस्तकूं अपना बल-पराक्रम--उद्यमकरि, त्याग करिके, अर सो परद्रव्य है मूल जाका ऐसी बहुत भावनिकी संतति-परिपाटीकूं दूरि युगपत् उडावनेकूं चाहता संता अतिशयकरि वहता प्रवाहरूप धारावाही पूर्ण एक स्वसंवेदन, तिसकरि युक्त जो अपना आत्मा, ताहि प्राप्त होय है। जिसकारणकरि उन्मूलित कीये हैं-मूलतै उपाडे हैं कर्मके बंधन जानै ऐसा भगवान् यह आत्मा आपहीविषै स्फुरायमान प्रगट होय है॥ भावार्थ—परद्रव्यके अर अपने भावके निमित्तनैमित्तिकभाव जानि, समस्त परद्रव्यकू त्यागै, तब समस्तरागादि भावनिकी संतति कटि जाय, तब आत्मा अपनाही अनुभव करता संता कर्मके बंधनकूं काटि आपहीविषै प्रकाशरूप प्रगटै है। तातै अपना हित चाहै है ॥ अब बंध अधिकार पूर्ण कीया, ताके अंतमंगलरूप ज्ञानकी महिमाका अर्थरूप कलशकाव्य कहै हैं—

**रागादीनामुदयमदयं दारयत्कारणानां कार्यं बंधं विविधमधुना सद्य एव प्रणुद्य।**
**ज्ञानज्योतिः क्षपिततिमिरं साधु सन्नद्धमेतत् तद्वद्यद्वत्प्रसरमपरः कोऽपि नास्या वृणोति ॥१७॥**

स० टी०—तद्वत्-तथा एतत् ज्ञानज्योतिः-बोधतेजः, अपर-न विद्यते पर अन्यत् यस्य तत्, प्रसर-प्रस्तार यातीत्याध्याहार्य यद्वत्-यथा, अस्य-ज्ञानज्योतिषः, विस्तारं कोऽपि अपरः-कर्मादिः, नावृणोति नाच्छादयति, कीदृक्ष तत्? क्षपिततिमिर-क्षपितं निराकृतं तिमिर-अज्ञानं, येन तत् अपरमपि ज्योतिः नाशितांधकार पुनः साधुसन्नद्धं साधुभिः-योगीश्वरैः, पक्षे साधुपुरुषैः

सन्नद्धं-आरूढं, स्तुतं च साधुभिः स्तूयमानत्वाज्ज्योतिषः, पुनः रागादीनां रागद्वेषमोहानां, उदयं-प्राकट्यं अदयं-निर्दयं यथा भवति तथा, सद्य एव- तत्कालमेव, दारयत्-विदारणं कुर्वत्, अन्यदपि ज्योतिः प्रातर्जानां रागादीनां दारकमित्युक्तिलेशः, किं कृत्वा ? अधुना इदानीं,विविधं प्रकृतिस्थित्यनुभागादिभेदेनानेकविधं वंधं, प्रणुद्य-निराकृत्य, किंभूतं ? कारणानां-उपादानरूप-पुद्गलानां कार्यं फलं कर्मरूपं ॥ १७ ॥

अर्थ–यह ज्ञानज्योति है सो क्षेप्या है-दूरि किया है अज्ञानरूप अंधकार जानैं सो तैसे सम्यकप्रकार सज्या जैसैं याका प्रसर कहिये फैलना अपर कोई आवरे नाही सो यह ऐसा पहलै कहा करिकैं सज्या सो कहै हैं। पहलै तो बंधके कारण जे रागादिकभाव, तिनिका उदयकूं जैसै निर्दयी काहूकूं विदारै तैसै तिनिकूं विदारता संता प्रगट्या, पीछै जब कारण दूरी भये, तब तिनिका कार्य जो कर्मका ज्ञानावरण आदि अनेकप्रकार बंध, ताकूं अब तत्कालही दूरि करिके अर सज्या है ॥ भावार्थ–ज्ञान प्रगट होय है जब रागादिक न रहै, तिनिका कार्य बंध न रहै, तब फेरि याकूं आवरणे-वाला कोई न रहै, सदाकाल प्रकाशरूप रहै ॥ ऐसै रंगभूमिमैं बंधका स्वांग प्रवेश कीया था, सो ज्ञानज्योति प्रगट भया, तब बंध स्वांग दूरिकरि निकसि गया ॥

जो नर कोय परै रजमाहि सचिक्कण अंग लगै वह गाढै ।
त्यौं मतिहीन जु राग विरोध लिये विचरै तब बंधन बाढै ॥
पाय सभै उपदेश यथारथ रागविरोध तजै निज चारै ।
नाहि बंधै नव कर्मसमूह जु आप गहै परभाव निकारै ॥ १ ॥

विशेष–भ० शुभचन्द्रजीने 'कारणाना कार्यं' इस वाक्यको 'बंध' का विशेषण किया है एवं उपादानरूप पुद्गलोंके फलरूप बंधको यह अर्थ किया है किंतु पं० जयचन्द्रजीने 'कारणाना' को 'रागादीना' का ही विशेषण कर कारणरूप जो राग आदि यह अर्थ किया है। तथा 'साधुसन्नद्ध इस पदका अर्थ संस्कृत टीकामें साधुओंसे स्तुत यह अर्थ किया है किंतु पं० जयचन्द्रजीने अच्छीतरह सजाहुआ यह अर्थ किया है ॥ १७ ॥

इति श्रीसमयसारस्थपद्यस्याध्यात्मतरंगिण्यपरनामधेयस्य व्याख्यायां सप्तमोऽङ्कः ॥ ७ ॥

इसप्रकार परमाध्यात्मतरंगिणीकी वचनिकाविषैं सातवां बंधाधिकार पूर्ण भया ॥ ७ ॥

# मोक्षाधिकार ॥ ८ ॥

नानाबंधध्वंसनकृतकेलिः कुंदकुंदविधुवर्यः । विधिविविधामृतचंद्रेद्धो भाति गुरुर्ज्ञानभूपः

अथ मोक्षतत्त्वं क्रमप्राप्तमाक्रामति—

**द्विधाकृत्य प्रज्ञाक्रकचक(द)लनाद्बंधपुरुषौ नयन्मोक्षं साक्षात्पुरुषमुपलंभैकनियतं ।**
**इदानीमुन्मज्जत्सहजपरमानंदसरसं परं पूर्णं ज्ञानं कृतसकलकृत्यं विजयते ॥ १ ॥**

सं० टी०—इदानी अधुना, मोक्षतत्त्वकथनावसरे, ज्ञानं विजयते सर्वोत्कर्षेण वर्तते, किंभूतं ? कृतेत्यादि कृतं-निष्पादितं सकलं कृत्यं-संसारावस्थाकर्तव्यं येन तत्, पुनः पूर्ण-संपूर्ण,प्रकर्षप्राप्तत्वात्, परं-उत्कृष्टं, सर्वप्रकाशकत्वात्, सहजेत्यादिः सहजः अकृत्रिमः, परमानंदः-परमसुखं, तेन सरसं-रसाढ्यं, उन्मज्जत्-उदय गच्छत्, पुरुषं-आत्मानं, साक्षात् अक्रमेण, मोक्षं-मुक्तिसंपदं, नयत्-प्रापयत्, किंभूतं तं? उपेत्यादिः-उपलंभः-स्वस्वरूपप्राप्तिः तत्र एकेन स्वभावेन नियतं-स्थितं तत्र लीनमित्यर्थः, किंकृत्वा ? द्विधाकृत्य-पृथक्कृत्वा, कौ ? बंधपुरुषौ-बंधः कर्मादिलेपः, पुरुषः-आत्मा, द्वंद्वः, तौ परस्परं मिलितौ पृथग्विधायेत्यर्थः कुतः ? प्रज्ञेत्यादिः-प्रज्ञा-भेदविज्ञानं सैव क्रकचः करपत्रं, तेन दलनं तस्मात् ॥ १ ॥ अथ प्रज्ञाछेत्रीममिष्टौति—

अर्थ—अब बंधपदार्थके अनंतर पूर्णज्ञान है सो प्रज्ञारूप करोंतकरि दलन कहिये विदारणतैं बंध अर पुरुषकूं द्विधा कहिये न्यारे न्यारे दोय करि अर पुरुषकूं साक्षात् मोक्षकूं प्राप्त करता संता जयवंत प्रवर्तैं है ॥ कैसा है पुरुष ? उपलंभ कहिये अपना स्वरूपका साक्षात् अनुभवन, ताहीकरि निश्चित है। बहुरि ज्ञान कैसा है ? उदय होता जो अपना स्वाभाविक परम आनद, ताकरि सरस है रस भऱ्या है, बहुरि पर कहिये उत्कृष्ट है, बहुरि कीये हैं समस्त करनेयोग्य कार्य जानें—अब कछु करना न रह्या है ॥ भावार्थ—ज्ञान है सो बंध पुरुषकूं जुदे करि पुरुषकूं मोक्ष प्राप्त करता संता अपना संपूर्णरूप प्रगट करि जयवंत प्रवर्तैं है, याका सर्वोत्कृष्टपणा कहना यहही मंगलवचन है ॥

**प्रज्ञाछेत्री शितेयं कथमपि निपुणैः पातिता सावधानैः**
**सूक्ष्मेंऽतःसंधिबंधे निपतति रभसादात्मकर्मोभयस्य ।**

आत्मानं मग्नमंतःस्थिरविशदलसद्धाम्नि चैतन्यपूरे
बंधं चाज्ञानभावे नियमितमभितः कुर्वती भिन्नभिन्नौ ॥ २ ॥

सं० टी०—इयं-प्रसिद्धा, प्रज्ञाछेत्री-बुद्धिछेत्री, शिता-अतितीक्ष्णा, रभसात्-वेगेन, निपतति-भिन्नकरणार्थं पतनं करोति, क्व ? सूक्ष्मे-अत्यंतं प्रत्यासन्नत्वाच्चैतन्यचेतकभावेनैकीभूतत्वेन सूक्ष्मे, अंत. संधिबंधे-अंतः-अभ्यंतरे, कर्मात्मनोः संधिबंधे संधानश्लेषे, कस्य ? आत्मकर्मोभयस्य-चिद्रूपकर्मयुग्मस्य, कीदृक्षा सा ? कथमपि महताग्रहेण पातिता तयोर्मध्ये भिन्नकरणकृते मुक्ता सती, कैः ? निपुणैः-धीमद्भिः, सावधानैः-एकाग्रचित्तैः, अभितः-सामस्त्येन, लक्षणभेदात् भिन्नभिन्नौ परस्पर तौ द्वौ भिन्नौ भिन्नौ, कुर्वती निर्मापयती, कं ? आत्मानं-चिद्रूपं, च पुनः, बंधं-कर्मबंधं कीदृक्षं-चिद्रूपं-चैतन्यपूरे समस्तशेषद्रव्यासाधारणत्वाच्चैतन्यं स्वलक्षणं, तस्य पूरः-समूहः, तत्र मग्नं-तन्मयमापन्नं, अंतरित्यादिः-अंतः-अभ्यंतरे चिद्रूपे स्थिर-अन्यत्र गमनाभावात् तत्रैव स्थितिमत् तच्च तद्विशदं च निर्मलं, लसत्-देदीप्यमानं धाम-महो यस्य तस्मिन्, कीदृक्ष बंधं ? अज्ञानभावे-अज्ञान स्वरूपे रागादौ स्वलक्षणे, नियमितं-निश्चयीभूतं,-तन्मयत्वमापन्नमित्यर्थ । अन्यापि छेत्री द्वयोर्धात्वोः स्वलक्षणभिन्नयोः, अंतः पातिता सती भिन्नत्वं चर्करीति तथा प्रज्ञाछेत्रीति विज्ञेयं ॥ २ ॥ अथ तयोर्भेदकं प्रलपति—

अर्थ—आत्मा अर बंधकूं भिन्न करनेकूं यह प्रज्ञा है सो तीक्ष्ण छैनी है । सो जे प्रवीण पुरुष हैं ते सावधान प्रमादरहित भये संते आत्मा अर कर्म इनि दोऊंनिका सूक्ष्म जो अंतः कहिये मांहिला संधीका बधन, ताविषैं याकूं कोई प्रकार यत्नकरि ऐसैं पटकै हैं सो यह बुद्धिरूपी छैनी तहां पडी हुई शीघ्रही समस्तपणें भिन्न भिन्न करती पडै है । सो आत्माकूं तौ अंतरंगविषैं स्थिर अर विशदलसत् कहिये स्पष्ट प्रकाशरूप दैदीप्यमान है धाम कहिये तेज जाका ऐसा जो चैतन्यका पूर प्रवाह, ताविषै मग्न करती संती पडै है । बहुरि बंधकूं अज्ञानभावविषै निश्चल नियमतै करती संती पडै है ॥ भावार्थ—इहां आत्मा अर बंधका भिन्न भिन्न करना नामा कार्य है । ताका कर्त्ता आत्मा है । अर करणविना कर्त्ता काहेकरि कार्य करै ? तातैं करण चाहिये । अर निश्चयनयकरि कर्त्ता तै भिन्न करण होय नाही । तातैं आत्मातैं यह बुद्धि ही, इस कार्यविषैं करण है । सो आत्माकै अनादि बंध ज्ञानावरणादि कर्म हैं । तिनिका कार्य भावकर्म रागादिक हैं । अर नोकर्म शरीरादिक हैं। सो बुद्धिकरि आत्माकूं शरीरतै तथा ज्ञानावरणादिक द्रव्यकर्मतैं तथा रागाभावकर्मतैं भिन्न एक चैतन्यभावमात्र अनुभव करि ज्ञानहीमैं लीन राखना, यहही भिन्न करना याहीतै सर्व कर्मका होय, सिद्धपदकूं प्राप्त होय है, ऐसैं जानना ॥

भित्त्वा सर्वमपि स्वलक्षणबलाद्भेत्तुं हि यच्छक्यते
चिन्मुद्रांकितनिर्विभागमहिमा शुद्धश्चिदेवास्म्यहं ।
भिद्यंते यदि कारकाणि यदि वा धर्मा गुणा वा यदि
भिद्यंतां न भिदास्ति काचन विभौ भावे विशुद्धे चिति ॥ ३ ॥

सं० टी०—हि-स्फुटं, अहं अहकं, शुद्धः-द्रव्यभावनोकर्ममलमुक्तः, चिदेव-चेतनास्वरूपमेव, अस्मि-भवामि, किंभूतः ? चिदित्यादिः-चिदेव मुद्रा-चिह्नं, तया अंकितः-चिह्नित', निर्विभागः-भेत्तुमशक्यो दुर्लक्ष्यत्वात्, महिमा-माहात्म्यं यस्य सः, किंकृत्वा ? यत् पुद्गलादिकं कर्म, भेत्तुं द्विधाकर्तुं, शक्यते-शक्यानुष्ठानं भूयते स्वलक्षणानां भेत्तुमशक्यत्वात् शक्यानुष्ठानाभावः, परलक्षणानां भेत्तुं शक्यत्वात् शक्यानुष्ठानं तत् सर्वमपि-समस्तमपि कर्मबंधं भित्त्वा-द्विधा विधाय, कुत ? स्वेत्यादिः स्वस्य-आत्मन., पुद्गलस्य च लक्षणं असाधारणस्वरूपं चैतन्यमचैतन्यं च तस्य बलात्-सामर्थ्यात्, यदि कारकाणि कर्तृकर्मादीनि-चेतयमानः एव चेतये, चेतयमानेनैव चेतये, चेतयमानाय चेतये, चेतयमानादेव चेतये, चेतयमानएव चेतये, चेतयमानमेव चेतये इति कारकाणि भिद्यंते तर्हि भिद्यंता-भेदं प्राप्नुवंतु वा-अथवा, यदि धर्माः-स्वभावाः-चैतन्याचैतन्यादयः, भेदं प्राप्नुवंति तर्हि भिद्यंतां, यदि वा गुणाः-मतिश्रुतादयः अनतज्ञानादयो वा भिद्यंते तर्हि भेदं प्राप्नुवंतु पुनः चिति-चिद्रूपे, भावे-पदार्थे, काचनकापि, भिदा भेद., नास्ति-कारकधर्मगुणभेदो न, किंभूते चिति ? विभौ-वि विशेषेण भवति ज्ञानादिस्वभावेनेति विभु. तस्मिन् विभौ, 'भुवो डुर्विंसंप्रेषु च, इति डुप्रत्यय , विशुद्धे-कर्ममलातीते, ॥ ३ ॥ अथ चेतनाया एकानेकरूपं विवक्षति—

अर्थ–ज्ञानी कहै है जो-भेदनेकूं न्यारे करनेकूं समर्थ हूजिये, तिस सर्वकूं निजलक्षणके बलतैं भेदकरि अर मैं चैतन्यचिह्नकरि चिह्नित विभागरहित है महिमा जाकी ऐसा शुद्ध चैतन्यही हौं ॥ बहुरि जो कर्त्ता कर्म करण सम्प्रदान अपादान अधिकरण ये षट्कारक अर सत्त्व असत्त्व नित्यत्व अनित्यत्व एकत्व अनेकत्व आदिक धर्म अर ज्ञान दर्शन आदिक गुण ए भेदरूप हैं, तौ भेदरूप होऊ। विशुद्ध समस्तविभावनितैं रहित एक अर विभु कहिये सर्व गुणपर्यायनिमैं व्यापक ऐसा चैतन्यभावविषै तौ किछु भेद है नाहीं ॥ भावार्थ–जो इस चैतन्यभावतैं अन्य अपने स्वलक्षणकरि भेदे गये ते तौ भेदरूप कीये अर कारकभेद अर धर्मभेद हैं, तौ होऊ। शुद्ध चैतन्यमात्रविषै तौ किछु भेद है नाही। शुद्धनयकरि आत्माकूं ऐसा अभेदरूप ग्रहण करना ॥

अद्वैतापि हि चेतना जगति चेद् दृग्ज्ञप्तिरूपं त्यजेत्
तत्सामान्यविशेषरूपविरहात्साऽस्तित्वमेव त्यजेत् ।
तत्त्यागे जडता चितोऽपि भवति व्याप्यो विना व्यापका-
दात्मा चांतमुपैति तेन नियतं दृग्ज्ञप्तिरूपास्तु चित् ॥ ४ ॥

सं० टी०—हीति-ननु, जगति भुवने, चेतना प्रतिभासरूपा अद्वैता एकरूपा, सर्वेषां प्रतिभासांत-प्रविष्टत्वेन एकरूपत्वसाधनात् तथाहि यत्प्रतिभासते-यत्प्रतिभासांतःप्रविष्टं यथा प्रतिभासस्वरूपं प्रतिभासंते चामी विवादापन्नाः पदार्थाः । सर्वं वै खल्विद् ब्रह्मेत्यादि वाक्यानामेकत्वसाधनाच्चैकैव चेतना इति चेत्तदा दृग्ज्ञप्तिरूपं सा दर्शनज्ञानस्वभावं त्यजेत् अथ तत्स्वभावं त्यजतु का नो हानि. ? इति वंदतमद्वैतिनं निराकरोति-सा-चेतना तत्-प्रसिद्धं अस्तित्वं-सत्तां, एव त्यजेत्, कुत ? सामान्येत्यादि -सामान्यं-दर्शनं, विशेषो ज्ञानं, तयो रूपं तस्य विरहः तस्मात्-सामान्यविशेषात्मकत्वात् सर्वस्य वस्तुनः 'सामान्यविशेषात्मा तदर्थो विषय'' इति वचनात् दृग्ज्ञानयो. सामान्यविशेषात्मकत्वात् तदभावे तदभावात् अपि दूषणद्वयं । तत्त्यागे तस्य अस्तित्वस्य, त्यागे-अभावे, अथवा दर्शनज्ञानस्याभावे चितः-चिद्रूपस्यापि जड़ता-अचेतनत्वं, चेति दूषणांतरे व्यापकात् अस्तित्वरूपात् दर्शनरूपाद्वा, विना ऋते, व्याप्यः-आत्मा, अंतं-विनाशं, उपैति-प्राप्नोति, व्यापकभावे व्याप्यस्याप्यभावात् प्रकाशाभावे प्रदीपवत् तेन जडत्वात्मा भावदूषणसद्भावेन चित्-चेतना, नियतं-निश्चितं, दृग्ज्ञप्तिरूपा-दर्शनज्ञानस्वरूपा, अस्तु-भवतु ॥ ४ ॥ अथ चेतनाचेतनयो: परत्वापरत्वं प्रपूर्यते—

अर्थ—जगतविषै निश्चयकरि चेतना अद्वैत है तौऊ जो दर्शनज्ञानरूपकूं छोडै तौ सामान्यविशेषरूपके अभावतैं सो चेतना अपना अस्तिपनाहीकूं छोडै । बहुरि जब चेतना अपना अस्तित्वकूं छोडै, तब चेतनके जड़ता होय है । बहुरि व्याप्य जो आत्मा, सो व्यापक जो चेतना, तिसविना अंतकूं प्राप्त होय, आत्माका नाश होय । तातैं नियमतैं चेतना है सो दर्शनज्ञानस्वरूपही होऊ ॥ भावार्थ—वस्तुका स्वरूप सामान्यविशेषरूप है, सो चेतनाभी वस्तु है, सो दर्शनज्ञानविशेषकूं छोडै, तौ वस्तुपणाका नाश होय, तब चेतनाका अभाव होतैं, कै तौ चेतनकै जडपणा आवै, कै चेतना आत्माकी सर्व अवस्थामैं पावै तातैं व्यापक है अर आत्मा चेतनाही है तातैं चेतनाके व्याप्य है सो व्यापकके अभा-

वतै व्याप्य जो चेतन आत्मा ताका अभाव होय है। तातैं चेतना दर्शनज्ञानस्वरूपा ही माननी ॥ इहां तात्पर्य ऐसा-जो सांख्यमती आदि केई सामान्यचेतनाहीकूं मानि एकांत कहै हैं, तिनिका निषेध करनेकूं वस्तुका स्वरूप सामान्यविशेषरूप है, सो चेतनाकूं सामान्यविशेषरूप अंगीकार करनी ऐसा जनाया है ॥ आगै कहै हैं, चेतनाका तौ चिन्मय एक भाव है अर अन्य परभाव हैं, सो चिन्मयभाव तौ उपादेय है अर परभाव हेय है, सो यह सूचनिका अगिले कथनकी है, ताका श्लोक है—

एकश्चितश्चिन्मय एव भावो भावाः परे ये किल ते परेषां।
ग्राह्यस्ततश्चिन्मय एव भावो भावाः परे सर्वत एव हेया॥ ५॥

सं० टी०—चितः-चिद्रूपस्य, एकः चिन्मयः-तद्दर्शनज्ञानमय एव भावः-स्वभावः, ये-प्रसिद्धा, परे-दृग्ज्ञसे परे, भावाः-रागादयः किलेति निश्चितं परेषां कर्मणां ते भावाः ततः आत्मीयस्वभावत्वात् चिन्मय एव दृग्ज्ञप्तिनिर्वृत्त एव स्वभावः, ग्राह्यः-आदेयः परभावाः-रागद्वेषादयः, सर्वत एव-सामस्त्येनैव, हेयाः-त्याज्याः ॥ ५ ॥ अथ रहस्यं सिद्धांतं साधयितुमुपक्रामति—

अर्थ—चैतन्यका तौ एक चिन्मयीही भाव है, अर अन्य भाव हैं, ते प्रगटपणै परके भाव हैं। तातै एक चिन्मयभाव है सोही ग्रहण करनेयोग्य है, बहुरि जे परभाव हैं, ते सर्वही त्यागनेयोग्य हैं॥

सिद्धांतोयमुदात्तचित्तचरितैर्मोक्षार्थिभिः सेव्यतां
शुद्धं चिन्मयमेकमेव परमं ज्योतिः सदैवास्म्यहं।
एते ये तु समुल्लसंति विविधा भावाः पृथग्लक्षणा-
स्तेऽहं नास्मि यतोऽत्र ते मम परद्रव्यं समग्रा अपि॥ ६॥

सं० टी—अयं सिद्धांतः सिद्धः-निष्पन्नः, अतः-धर्मः स्वभावो वा यस्य सः तात्पर्यं वा सेव्यतां-आश्रियतां, कैः ? मोक्षार्थिभिः-मुमुक्षुभिर्योगिभिः, किंभूतैः ? उदात्तचित्तचरितैः-उदात्तं-उत्तमं, यत् चित्तं ज्ञानं तदेव चरितं-आचरणं येषां तैः, अयं कः सदैव-नित्यमेव अहं परमं ज्योतिः-परधाम, अस्मि-भवामि, किंभूतं तत् ? शुद्धं-कर्ममलरहितत्वात् चिन्मयं ज्ञप्तिरूपत्वात्, एकमेव परभावरहितत्वात् तु-पुनः, एते-प्रसिद्धाः, विविधाः- नानाप्रकाराः, असंख्यातलोकमात्रत्वात्, भावाः-रागद्वेषादयः परि-

णामाः, समुल्लसंति-प्रादुर्भवंति ते भावाः, अहं चिद्रूपः, नास्मि-न भवामि, कुतः ? यत-यस्मात्कारणात् पृथग्लक्षणाः- आत्मनः विपरीतलक्षणाः अज्ञानस्वभावत्वात् अत्र इह स्वस्वरूपविचारणे ते-भावा., समग्रा अपि-समस्ता अपि कषायाध्यवसायाः मम-चिद्रूपस्य, परद्रव्यं पुद्गलकर्मोत्पादितत्वात् अतः सर्वथा चिद्भाव एव गृहीतव्यः, शेषाः सर्वे भावा. प्रहातव्या इति सिद्धांत ॥ ६ ॥ अथ सापराधिनो बधं द्योतते—

अर्थ--उज्ज्वल है उत्कट है चित्तका चरित्र जिनिका ऐसे मोक्षके अर्थी पुरुष हैं, ते यह सिद्धांत सेवन करो-जो, मै तौ शुद्ध चैतन्यमय एक परमज्योति ही सदा ही हौं, अर ए जे अनेक प्रकारके भिन्नलक्षणरूप भाव हैं, ते मै नाही हौं। जातै ते समग्र कहिये सारेही मेरे परद्रव्य हैं। भावार्थ सुगम है ॥ आगै कहै हैं, जो परद्रव्यकूं ग्रहण करै है, सो अपराधवान है, बंधमें पडै है । अर जो निजद्रव्यमें संतुष्ट है सो निरपराधी है, बंधै नाही है। ऐसी सूचिनिकाका अगिले कथनका श्लोक है—

परद्रव्यग्रहं कुर्वन् बध्यते चापराधवान् ।
बध्येतानपराधो न स्वद्रव्ये संवृतो यतिः ॥ ७ ॥

सं० टी०—अपराधवान् सापराध. पुमान्, एव-निश्चयेन, बध्येत-कर्मबंधनं प्राप्नुयात्, सापराधत्वं लक्षयति-परद्रव्यग्रहं-परद्रव्याणा ममेति बुद्ध्या ग्रहं-ग्रहणं, कुर्वन्- चिंतयन्, अन्योपि परद्रव्यग्रहणं कुर्वन् बंधं प्राप्नोति पुनर्नान्य इत्युक्तिलेशः अनपराधः-परद्रव्यग्रहणलक्षणापराधरहित., यतिः-स्वयत्नचारित्वात् योगी न बध्येत न बंधनं याति। स्वद्रव्ये चिद्रूपे संवृतः संवरणं कुर्वन् स्थितः तदपराधरहितः न याति बंधनं ॥ ७ ॥ अथ सापराधापराधयो. बंधाबंधौ बिभर्ति—

अर्थ—जो परद्रव्यकूं ग्रहण करता संता है, सो तौ अपराधवान् है, सो बंधमै पडै है । बहुरि अपने ही द्रव्यविषैं संवररूप है संतुष्ट है परद्रव्यकूं नाही ग्रहण करै है सो यतीश्वर अपराधरहित है, सो बंधै नाही ॥

अनवरतमनंतैर्बध्यते सापराधः स्पृशति निरपराधो बंधनं नैव जातु ।
नियतमयमशुद्धं स्वं भजन् सापराधो भवति निरपराधः साधु शुद्धात्मसेवी ॥ ८ ॥

सं० टी०—सापराधः-परद्रव्यपरिहारेण शुद्धस्यात्मनः-सिद्धिः साधनं वा राधः, अपगतो राधो यस्य चेतयितुर्भावस्य

वा सोऽपराधस्तेन सह वर्तत इति सापराधो यतिः, अनवरतं निरंतरं-प्रतिसमयं, अनंतैः-अनंतसंख्यावच्छिन्नैर्बंधनैः, वध्यते-वंधनं याति, ननु कर्मणां ज्ञानावरणादीनां कषायाध्यवसायानां चासंख्यातलोकत्वघटनादनंतत्ववचनं विरुध्यते ? इति चेत्सत्यं कर्मणामध्यवसायानामसंख्यातत्वे सत्यपि कर्मपरमाणूनामनंतत्वघटनात्, निरपराधः-उपयोगोन्मुखः-परद्रव्यग्रहणापराधरहितः, जातु-कदाचित्, वंधनं-कर्मवंधनं, नैव स्पृशति-न प्राप्नोति। अयं-यतिः, नियतं-निश्चित, अशुद्धं-रागद्वेषकलुषीकृतं, स्वं-आत्मानं, भजन् सन् सापराधो भवति-स्वस्वरूपपराङ्मुखत्वात्-साधु-समीचीनं यथा भवति तथा, शुद्धात्मसेवी-शुद्धमात्मानं सेवत इति शुद्धात्मसेवी-मुनिः, निरपराधः-परद्रव्यग्रहणापराधरहितः, स्वद्रव्यसेवित्वादाराधक एव॥ अथ प्रतिक्रमणाप्रतिक्रमणं विवेचयति—

अर्थ—जो आत्मा सापराध है, सो तौ निरंतर अनंतपुद्गलपरमाणुरूप कर्मनिकरि वंधै है ॥ वहुरि जो निरपराध है, सो वंधनकूं कदाचित् नाही स्पर्शै है। वहुरि यह सापराध आत्मा है, सो तौ अपने आत्माकूं नियमकरि अशुद्धही सेवता सापराधही होय॥ वहुरि जो निरपराध है, सो भलेप्रकार शुद्ध आत्माका सेवनेवाला होय है ॥ आगै व्यवहारनयका आलंवी तर्क करै है-जो, इस शुद्ध आत्माका सेवनका प्रयास कहिये खेद, ताकरि कहा है ? जातै प्रतिक्रमण आदि प्रायश्चित्त हैं, ताकरि ही आत्मा निरपराध होय है। जातै सापराधके तौ अप्रतिक्रमणादि हैं, सो अपराधके दूरि करनेवाले नाही हैं, तातै तिनकूं विपकुंभ कहै हैं ॥ वहुरि निरपराधके प्रतिक्रमणादिक हैं, ते तिस अपराधके दूरि करनेवाले हैं, तातै तिनिकूं अमृतकुंभ कहै हैं ॥ सोही व्यवहारका कहनेवाला आचारसूत्रविषै कह्या है ॥ उक्तं च गाथा—अप्पडिकमणमप्पडिसरणं अप्पडिहारो अधारणा चेव ॥ अणियत्ती य अणिंदा गरहासोही य विसकुभो ॥ १ ॥ पडिकमणं पडिसरणं परिहारो धारणा-णियत्ती य ॥ णिंदा गरहा सोही अट्ठविहो अमयकुंभो दु ॥ २ ॥ अर्थ—अप्रतिक्रमण, अप्रतिशरण, अपरिहार, अधारणा, अनिवृत्ति, अनिंदा, अगर्हा, अशुद्धि ऐसें आठ प्रकार करिके लगै दोपका प्रायश्चित्त करना, सो तो विपकुंभ है जहरका भऱ्या घडा है वहुरि प्रतिक्रमण, प्रतिशरण, परिहार, धारणा, निवृत्ति, निंदा गर्हा, शुद्धि ऐसै आठ प्रकार लगै दोपका प्रायश्चित्त करना सो अमृतकुंभ है ॥ ऐसै व्यवहारनयके पक्षीनै तर्क किया, ताका समाधान आचार्य निश्चयनयकूं प्रधान करी कहै हैं—

**यत्र प्रतिक्रमणमेव विषं प्रणीतं तत्राप्रतिक्रमणमेव सुधा कुतः स्यात्।**

## तत्किं प्रमाद्यति जनः प्रपतन्नधोधः किन्नोर्ध्वमूर्ध्वमधिरोहति निष्प्रमादः ॥ ९ ॥

सं. टी –यत्र शुद्धात्मस्वरूपे, प्रतिक्रमणमेव द्रव्यरूपः प्रतिक्रमणादिरेव अज्ञानजनसाधारणोऽप्रतिक्रमणादिस्तावदास्तामित्येवशब्दार्थः, विष हलाहलं प्रणीतं स्वकार्यकरणासमर्थत्वात् तद्विपक्षशुभबंधनकार्यकारित्वाच्च, तत्र-आत्मस्वरूपे अप्रतिक्रमणमेव पूर्वोक्तप्रतिक्रमणाप्रतिक्रमणद्वयरहिततृतीयशुद्धात्मोपयोगरूपप्रतिक्रमणं सुधाकुट'-अमृतकुभ., स्यात् स्वकार्यकारित्वात्, नत् तस्माद्धेतोः, जनः लोक , प्रमाद्यति कि-कथं प्रमादं करोति, अधोधः-प्रतिक्रमणेतरद्वयाधोभूमौ प्रपतन् सन्, निष्प्रमादः-प्रमादरहित सन् ऊर्ध्वमूर्ध्व-उपर्य्युपरि, अप्रतिक्रमणरूपं तार्तीयकं कि कथं, नाधिरोहति न चटति, इति स्वरूपव्यतिरिक्तस्य न किमपि प्रतिक्रमणादिनेति सूचित ॥ ९ ॥ अथ प्रमादमापादयति—

अर्थ–अहो भाई, जहा प्रतिक्रमणहीकूं विष कह्या, तहां काहेतै अप्रतिक्रमण अमृत होय ? तातै यह जन नीचै नीचै पडता संता प्रमादरूप क्यौ होय है ? निष्प्रमादी भया संता ऊंचा ऊंचा क्यौं नाही चढै है ॥ भावार्थ–आचार्य कहै हैं, जो अज्ञानावस्थामै जो अप्रतिक्रमणादिक था, ताकी तौ कथाही कहा ? इहां तौ निश्चयनयकूं प्रधान करि अर द्रव्यप्रतिक्रमणादिक शुभप्रवृत्तिरूप थे, तिनिकी पक्ष छुडावनेकू तिनिकूं तौ विषकुभ कहे हैं ॥ जातै ए कर्मबधकेही कारण हैं, बहुरि अप्रतिक्रमणप्रतिक्रमणतै रहित तीसरी भूमि शुद्ध आत्मस्वरूप है सो प्रतिक्रमणादितै रहित है । तातै तहांके अप्रतिक्रमणादिककूं अमृतकुंभ कह्या है ॥ तीसरी भूमिविषैं चढावनेकू उपदेश किया है सो प्रतिक्रमणादिककूं विषकुंभ कहै सुणिकरि जो प्रमादी होय ताकूं कहै हैं यह जन नीचा नीचा क्यौ पडै है ? तीसरी भूमीमैं ऊंचा ऊंचा क्यौ नाही चढै है ? जहां प्रतिक्रमणकूं विषकुभ कह्या, तहां तौ तिसका निषेधरूप अप्रतिक्रमणही अमृतकुंभ होगया ॥ सो यह अप्रतिक्रमणादिक अज्ञानीकै होय सो न जानना तीसरी भूमिका शुद्ध आत्ममयी जानना ॥ आगै इस अर्थकूं दृढ करते संते काव्य कहै हैं—

विशेष—प० जयचद्रजीने 'सुधा कुत' स्यात्' यह पाठ मानकर जहापर प्रतिक्रमण भी हलाहल विष है वहा अप्रतिक्रमण अमृत कैसे हो सकता है ? यह अर्थ किया है और भट्टारक शुभचद्रजीने 'सुधाकुट स्यात्' यह पाठ रखकर प्रतिक्रमण तो विषस्वरूप है एव अप्रतिक्रमण-द्रव्यप्रतिक्रमण तथा प्रमादी अज्ञानीके अप्रतिक्रमणसे भिन्न शुद्धात्मोपयोगरूप प्रतिक्रमण अमृत कुभ है यह अर्थ किया है परतु भावाशमें कहीं कोई भेद नहीं क्योंकि प० जयचद्रजीने जो भाव लिखा है वही एव पदकी सामर्थ्यसे संस्कृत टीकाकारने भी स्पष्ट किया है ॥ ९ ॥

अतो हताः प्रमादिनो गताः सुखासीनतां प्रलीनं चापलमुन्मीलितमालंवनं ।
आत्मन्येव चालानितं चित्तमासंपूर्णविज्ञानघनोपलब्धेः ॥ १० ॥ चूर्णिः ॥

नोट—इसश्लोककी संस्कृत टीका उपलब्ध नहीं हुई ॥ १० ॥

अर्थ—इस कथनतैं सुखकरि वैठनेपणाकूं प्राप्त भये ऐसे प्रमादीजीवनिकूं तौ ताडे हैं। जे निश्चयनयका आश्रय ले प्रमादी होय प्रवर्तैं, तिनिकूं ताडिकरि उद्यम विषै लगावै हैं बहुरि चपलपणाका प्रलय किया है। जे स्वच्छंद वर्तैं तिनिका स्वच्छंदपणा मेट्या है। बहुरि आलंबनकूं उपाड्या है। जे व्यवहारकी पक्षकरि परद्रव्यका तथा द्रव्यप्रतिक्रमणादिका आलंवन ले संतुष्ट होय हैं, तिनिका आलंवन छुडाया है। बहुरि चित्तकूं आत्मा ही विषैं आलानित किया है, थांम्या है। व्यवहारके आलवनमें अनेक प्रवृत्तिमें चित्त भ्रमे था, सो शुद्ध आत्माहीविषै लगाया है। जहांतांई संपूर्णविज्ञानघन आत्माकी प्राप्ति न होय, तहांतांई चैतन्यमात्र आत्माविषै चित्त लग्या रहै ऐसै थाम्या है, ऐसै जानना ॥

प्रमादकलितः कथं भवति शुद्धभावोऽलसः कषायभरगौरवादलसता प्रमादो यतः ।
अतः स्वरसनिर्भरे नियमितः स्वभावे भवन्मुनिः परमशुद्धतां व्रजति मुच्यते वाचिरात् ॥११॥

सं॰ टी॰—प्रमादकलित-सार्धसप्तत्रिंशत्सहस्रभेदप्रमादयुक्तो-मुनि, अलसः-आलस्यवान् सन्, शुद्धभावः-शुद्धो भावः स्वभावो यस्य स,-परमात्मा कथं भवति ? न कथमपि। कुतः ? कषायेत्यादि-कषायाणा-क्रोधादीनां, भरः-समूह, तस्य गौरवः-माहात्म्यं, तस्मात् कषायेंद्रियविकथादिपरावृत्तिजत्वात् प्रमादानां। यत. कारणात् अलसता-आलस्यमेव प्रमादः, तयोरेकार्थत्वात्, अतः कारणात् परममननात् मुनिः-योगी परमशुद्धतां-अत्यंतविशुद्धिं, व्रजति- प्राप्नोति। च-पुनः, अचिरात्-शीघ्रं, मुच्यते संसारवंधनात् मुक्तो भवति, किंभूतः? नियमित-नियंत्रितः सन्, क? स्वेत्यादि -स्वस्य-आत्मनः, रसः, तस्य निर्भरः-अतिशयः तस्मिन्, पुन स्वभावे-आत्मस्वरूपे भवन्-स्थितः सन् ॥ ११ ॥ अथ सचौपराधं च्योतति—

अर्थ—जातैं कषायका भर कहिये भार, ताका गौरव कहिये भरयापणा, तातैं अलसता कहिये अलसपणा, ताकूं प्र-

१—यह श्लोक न॰ ९ पर है जो कि समयसार गाथाओंकी टीकाके अनुसार ठीक है परंतु यहा प्रकृतमें न॰ ९ पर ठीक न हो १०पर ठीक वैठता है इसलिये हमने नवर बदल दिया है।

माद्करि युक्त अलसभाव होय, सो शुद्धभाव कैसै होय ? तातै आत्मिकरसकरि भरया स्वभावविषै निश्चल होता संता मुनि है सो परमशुद्धताकूं प्राप्त होय है। बहुरि शीघ्रही थोरे ही कालमें कर्मबंधतै छूटै है ॥ भावार्थ—प्रमाद तौ कषायका गौरवतै होय है, सो प्रमादीकै शुद्धभाव होय नाही। जो मुनि उद्यमकरि स्वभावमें प्रवर्तै है सो शुद्ध होयकरि मोक्षकूं प्राप्त होय है ॥ आगे मुक्त होनेका अनुक्रमके अर्थरूप काव्य कहै हैं अर मोक्षका अधिकार पूर्ण करै हैं—

त्यक्त्वाशुद्धिविधायि तत्किल परद्रव्यं समग्रं स्वयं
स्वद्रव्ये रतिमेति यः स नियतं सर्वापराधच्युतः।
बंधध्वंसमुपेत्य नित्यमुदितः स्वज्योतिरच्छोच्छल-
चैतन्यामृतपूरपूर्णमहिमा शुद्धो भवन्मुच्यते ॥ १२ ॥

सं० टी०—किल इत्यागमोक्तौ, यः योगी, स्वयं स्वरूपेण कृत्वा, स्वद्रव्ये-स्वात्मद्रव्ये, रतिं-रमणं, एति-गच्छति, किंकृत्वा ? तत्-प्रसिद्धं, समग्रं-निखिलं, परद्रव्यं-कर्मादिद्रव्यं त्यक्त्वा हित्वा, किंभूतं ? अशुद्धिविधायि-रागाद्यशुद्धिकारकं, सः-मुनिः, मुच्यते कर्मबंधनात्। कीदृक्षः सन् ? नियतं-निश्चितं, सर्वेत्यादिः-पूर्वोक्तैः-समस्तापराधैः, च्युतः-रहितः सन्, किंकृत्वा ? बंधध्वंसमुपेत्य, स्वेत्यादिः-स्वस्य आत्मनः ज्योतिः-प्रकाशः तेन अच्छं-निर्मलं, उच्छलत्-उदयं गच्छत् तच्च तच्चैतन्यं च तदेवामृतपूरः सुधासमूहः, तेन पूर्णः संपूर्णः, महिमा-माहात्म्य यस्य स, १२ ॥ अथ मोक्षं महते—

अर्थ—जो पुरुष, निश्चयकरि अशुद्धताका करनेवाला जो परद्रव्य, ताकूं सर्वकूं छोडिकरि अर आप अपने निजद्रव्यविषैं रतीकूं प्राप्त होय है-लीन होय है, सो पुरुष नियमतै सर्व अपराधतै रहित भया संता, बंधका नाशकूं प्राप्त होय; करि नित्य उदयरूप भया संता, अपना स्वरूपका प्रकाशरूप ज्योतिकरि निर्मल उछलता जो चैतन्यरूप अमृतका प्रवाह, ताकरि पूर्ण है महिमा जाकी ऐसा शुद्ध होता संता कर्मनितैं छूटै है ॥ भावार्थ—पहलै समस्त परद्रव्यका त्याग करि अपना निजद्रव्य आत्मस्वरूपविषै लीन होय है, सो सर्व रागादिक अपराधतैं रहित होय आगामि बंधका नाश करै है अर नित्य उदयरूप केवलज्ञानकूं पाय शुद्ध होय सर्व कर्मका नाश करि मोक्षकू प्राप्त होय है, यह मोक्ष होनेका अनुक्रम है ॥ ऐसै मोक्षका अधिकार पूर्ण भया, ताके अंत मंगलरूप ज्ञानकी महिमाका कलशरूप काव्य कहै हैं—

**वंधच्छेदात्कलयदतुलं मोक्षमक्षय्यमेतन्नित्योद्योतस्फुटितसहजावस्थमेकांतशुद्धं ।**
**एकाकारस्वरसभरतोऽत्यंतगंभीरधीरं पूर्णं ज्ञानं ज्वलितमचलं स्वस्य लीनं महिम्नि ॥ १३॥**

सं० टी०–एतत् पूर्णं संपूर्णं ज्ञानं, ज्वलितं दीपितं, प्रकाश प्राप्तमित्यर्थः, कीदृक्षं ? स्वस्य–आत्मन , महिम्नि-माहात्म्ये, लीनं एकतामापन्न, किंभूते ? अचले-निष्कंपे, पुनः कीदृक्षं ? अत्यंतेत्यादिः-अत्यतं गभीर अतुलस्पर्शं तच्च तद्धीर च, कुतः ? एकेत्यादि एकाकारेण, सर्वत्र ज्ञानाकारेण, स्वस्य-आत्मनः, रस', तस्य भर.-अतिशयः,तस्मात्,पुन. मोक्ष कर्ममोचनमोक्षं, पुनः नित्येत्यादिः-नित्योद्योतेन निरावरणज्ञानप्रकाशेन, स्फुटिता-प्रकाशिता, सहजा-स्वाभाविकी, अवस्था-दशा, लक्षणया स्वरूपं यत्र तं, पुनः एकातशुद्धं एकातेन एकधर्मेण-कर्ममुक्तिलक्षणेन शुद्धं-निर्मलं समस्तपदाधिक्यादत्यंतविशुद्धं ॥ १३ ॥

अर्थ– यह ज्ञान है सो पूर्ण भया संता देदीप्यमान प्रगट भया । कहा करता संता प्रगट भया ? कर्मका वंध था ताके छेदतैं अविनाशी अतुल जो मोक्ष, ताकूं प्राप्त होता संता । वहुरि कैसा प्रगट भया ? नित्य है उद्योत प्रकाश जाका ऐसी प्रफुल्लित भई है स्वाभाविक अवस्था जाकी । वहुरि कैसा प्रगट भया ? एकांतशुद्ध कहिये ताकै कर्मका मैल न रह्या अत्यंत शुद्ध भया प्रगट भया । वहुरि कैसा प्रगट भया ? एक जो अपना ज्ञानमात्र आकार, ताका निज-रसका भारतै अत्यत गंभीर है धीर है जाकी थाह नाही अर जामैं किछू आकुलता नाही । वहुरि प्रगट होयकरि कहा कीया ? अचल जो कोई प्रकार चलै नाही ऐसी आपकी महिमा, ता विषै लीन भया । भावार्थ–यह ज्ञान प्रगट भया सो कर्मका नाशकरि मोक्षरूप होता अपनी स्वाभाविक अवस्थारूप अत्यंत शुद्ध समस्त ज्ञेयाकारकूं गौण करि ज्ञानका प्रकाश " जाका थाह नाही जामैं आकुलता नाही " ऐसा प्रगट देदीप्यमान होयकरि अपनी महिमाविषै लीनभया । ऐसैं रंगभूमिविषै मोक्षतत्त्वका स्वांग आया था; सो ज्ञान प्रगट भया, मोक्षका स्वांग निसरि गया ।

ज्यो नर कोय पर्यो दृढबंधन बंधस्वरूप लखै दुखकारी ।
चित करै निति कैम कटै यह तौऊ छिदै नही नैक न टारी ॥
छेदनकूं गहि आयुध धाय चलाय निशंक करै दुय धारी ।
यों बुध बुद्धि धसाय दुधा करि कर्म रु आतम आप गहारी ॥

इति श्रीसमयसारस्थपद्यस्याध्यात्मतरंगिण्यपरनामधेयस्य व्याख्यायां अष्टमोऽङ्कः ॥ ८ ॥

इसप्रकार परमाध्यात्मतरंगिणीकी वचनिकाविषै आठवां मोक्षाधिकार पूर्ण भया ॥ ८ ॥

# अथ सर्वविशुद्धज्ञानाधिकारः ॥ ९ ॥

सकलारामविमुक्तं युक्तं सुज्ञानसंपदा सारं । भजते मुक्तिं वचसाऽमृतचंद्रोऽमृतमयो जंतुः (?) ॥

दोहा—सर्वविशुद्ध सुज्ञानमय, सदा आतमाराम ॥
परकूं करै न भोगवै, जानै जपि तसु नाम ॥

इहां मोक्षतत्त्वका स्वांग निकसनेके अनंतर सर्वविशुद्धज्ञान प्रवेश करै है ॥ रंगभूमिविषै जो जीवका, कर्ता, कर्म, पुण्य, पाप, आस्रव, संवर, निर्जरा, मोक्ष ये आठ स्वांग आये तिनिका नृत्य भया । अपना अपना स्वरूप दिखाय निकसि गये । अब सर्व स्वांग दूरि भये एकाकार सर्वविशुद्धज्ञान प्रवेश करै है । तहां प्रथम मंगलरूप ज्ञानपुंज आत्माकी महिमाका काव्य कहै हैं—

अथ सर्वविशुद्धं ज्ञानमुदेति—

**नीत्वा सम्यक् प्रलयमखिलान्कर्तृभोक्त्रादिभावान् दूरीभूतः प्रतिपदमयं बंधमोक्षप्रक्लृप्तेः ।**
**शुद्धः शुद्धः स्वरसविसरापूर्णपुण्याचलार्चिष्टंकोत्कीर्णप्रकटमहिमा स्फूर्जति ज्ञानपुंजः ॥ १ ॥**

सं० टी०—अयं ज्ञानपुंजः-बोधस्यानंतसंख्यावच्छिन्नविभागशुद्धः सन् प्रतिच्छेदसमूहः, प्रतिपदं-एकेंद्रियादिस्थानं प्रथमद्वितीयादिगुणस्थानं गुणस्थानं प्रति, स्फूर्जति गर्जति-द्योतत इत्यर्थः । किंकृत्वा ? नीत्वा-प्राप्य, कं ? सम्यक्-प्रलय-निश्शेषविनाशं, कान् ? निखिलान् समस्तान् कर्त्रेत्यादिः-कर्ता कर्मकारकः भोक्ता- कर्मफलभोक्ता, कर्ता च भोक्ता च कर्तृभोक्तारौ तावेवादिर्येषामुत्पाद्योत्पादकादीना ते तथोक्ताः, ते च ते भावाश्च परिणामाः तान्, किंभूतः ? दूरीभूतः, कुतः ? बंधेत्यादि-कर्मबंधमोचनयोः प्रक्लृप्तिः-कल्पना तस्याः, पुनः शुद्धः-निर्मल, पुनः कीदृक्षः ? स्वेत्यादि-स्वस्य-आत्मनः, रसः अनुभव तस्य विसर समूहः स एवापूर्णः-संपूर्णः पुण्याचलः-प्रशस्ताचलः-उदयाचलः तत्रार्चिः तेजः, यस्य सः, टंकेन उत्कीर्णः प्रकटः, महिमा- माहात्म्यं यस्य स, स्वरसेत्यादिरेकपदं वा स्वरसविसरापूर्णपुण्याचलार्चिश्चासौ टंकोत्कीर्णप्रकटमहिमा च ॥ १ ॥ अथात्मनः कर्तृत्वभोक्तृत्वं कीर्तयति—

अर्थ—ज्ञानका पुञ्ज आत्मा है, सो स्फुरायमान प्रगट होय है ॥ कहाकरी प्रगट होय है ? समस्तही कर्ता अर भोक्ता

इत्यादिक भाव हैं तिनि सर्वहीकूं भलै प्रकार प्रलय कहिये नाशकूं प्राप्त करी प्रगट होय है ॥ बहुरि कैसा है? प्रतिपद कहिये वारंवार नाशकूं प्राप्त करी प्रगट होय है। कर्मके क्षयोपशमके निमित्ततैं अनेक अवस्था होय हैं, तिनिप्रती बंध-मोक्षकी जो कल्पना प्रवृत्ति तातै दूरीभूत है-दूरवर्त्ती है ॥ बहुरि शुद्ध है शुद्ध है। दोय बार कहनेतैं रागादिक मल अर आवरण दोऊतै रहित है। बहुरि कैसा है? अपना निजरस जो ज्ञानरस, ताका विसर कहिये फैलना, ताकरि आ-पूर्ण कहिये भरया ऐसा पवित्र अर अचल है अर्चि कहिये दीप्ति-प्रकाश जाका। बहुरि कैसा है? टंकोत्कीर्ण है प्रगट महिमा जाकी। भावार्थ—शुद्धनयका विषय ज्ञानस्वरूप आतमा है सो कर्ताभोक्तापणाका भावसूं रहित है। बहुरि बंधमोक्षकी रचनाकरि रहित है, अर परद्रव्यतै अर सर्व परद्रव्यके भावनितै रहित है, तातै शुद्ध है। अर अपने निज-रसका प्रवाहकरि पूर्ण दैदीप्यमान ज्योतीरूप टंकोत्कीर्ण जाकी महिमा है। सो ऐसा ज्ञानपुज आतमा प्रगट होय है ॥ अब सर्व विशुद्धज्ञानकूं प्रगट करै हैं। तहां प्रथम ही जो कर्त्ता भोक्ताभाव हैं तिनकूं न्यारा दिखावै हैं, ताकी सूचनिकारूप श्लोक है—

कर्तृत्वं न स्वभावोऽस्य चितो वेदयितृत्ववत्।
अज्ञानादेव कर्तायं तदभावादकारकः ॥ २ ॥

सं० टी०— अस्य चितेः-चिद्रूपस्य, कर्तृत्वं-कर्मकारकत्वं, न स्वभावः-न स्वरूपं, किमिव ? वेदयितृत्ववत्-यथा वेद-यितृत्वं-भोक्तृत्वं, आत्मनो न संभवति तथा कर्तृत्वमपि। अयं-आत्मा, कर्ता कर्मणां कारकः इति प्रतीतिर्दृश्यते तत्कथं ? आ-त्मा कारकः-कर्मणां कर्ता भवेत्, कुतः ? तदभावात् तस्य ज्ञानस्य, अभावः-विनाशस्तस्मात् अज्ञानतो मया कृतमिति मनुते तदभावादकर्तृत्वमेव ॥ २ ॥ अथाकर्तृकत्वं चिंतयति—

अर्थ—इस चित्स्वरूप आतमाका कर्तापणा स्वभाव नाही है जैसै वेदयितृत्व कहिये भोक्तापणा स्वभाव नाही है। जैसे वेदयितृत्व कहिये भोक्तापणा स्वभाव नाही है, तैसै ॥ सो यह आतमा कर्ता मानिये है, सो अज्ञानतैं मानिये है। अर जब अज्ञानका अभाव होय है, तब अकारक कहिये कर्त्ता नाही है ॥

अकर्त्ता जीवोयं स्थित इति विशुद्धः स्वरसतः स्फुरच्चिज्ज्योतिर्भिश्छुरितभुवनाभोगभवनः।

तथाप्यस्यासौ स्याद्यदिह किल बंधः प्रकृतिभिः स खल्वज्ञानस्य स्फुरति महिमा कोऽपि गहनः॥

सं० टी—अमुना प्रकारेण स्वपरिणामैरुत्पद्यमानस्य जीवस्य तेन सह कारणभावाभावः सर्वद्रव्याणां द्रव्यांतरेणोत्पाद्योत्पादकभावाभावात् इति प्रकारेण, अयं जीवः-चिद्रूपः, अकर्ता-कर्मणामकारकः सन् स्थितः सुस्थः, किंभूतः ? स्वरसत स्वभावतः कर्मोपाधिनिरपेक्षतः विशुद्धः निर्मलः, स्फुरदित्यादिः स्फुरंति-प्रकाशमानानि तानि च तानि चिज्ज्योतींषि च ज्ञानतेजांसि च तैः, छुरितेत्यादिः छुरितं-प्रकाशितं, भुवनमेव विष्टपमेव, भोगभवनं-परिपूर्णगृहं येन सः, तथापि आत्मनः समस्तविज्ञानमयत्वेनाकर्तृकत्वे सत्यपि, किल इति निश्चितं, इह-जगति, ज्ञानावरणादिकर्मभिः, स्यात्-भवेत् खलु-इति निश्चितं, यत् यस्माद्धेतोः अस्य-आत्मनः, असौ बंध संश्लेषः, प्रकृतिभिः सः-कोऽपि-अनिर्दिष्टः, गहनः- अज्ञाततत्स्वरूपः, अज्ञानस्य ज्ञानाभावस्य, महिमा-माहात्म्यं, स्फुरति विजृंभते, अतिशयालंकारोयं ॥ ३ ॥ अथ भूयः कर्तृत्वभोक्तृत्वमामनति—

अर्थ--ऐसै जीव है सो अपने निजरसतैं विशुद्ध है। यातै परद्रव्यका तथा परभावनिका अकर्ता ठहरया। कैसा है जीव ? स्फुरायमान होता- फैलता जो चैतन्यज्योति, तिनिकरि व्याप्त भया है भुवन कहिये लोकका आभोग कहिये मध्य जाकरि, ऐसा है भवन कहिये होना जाका। ऐसा है तौऊ याकै इस लोकविषै प्रगट कर्मप्रकृतिनिकरि बंध होय है ॥ सो यह निश्चयकरि अज्ञानका कोई ऐसा ही महिमा है, सो बडा गहन है-ताका थाह न पाइये ॥ भावार्थ- शुद्धनयकरि जीव परद्रव्यका कर्ता नाही अर सर्व ज्ञेयनिविषैं जाका ज्ञान व्यापनेवाला है, तौऊ याकै कर्मका बंध होय है सो यह कोई अज्ञानका बडा महिमा है ॥

भोक्तृत्वं न स्वभावोऽस्य स्मृतः कर्तृत्ववच्चितः।
अज्ञानादेव भोक्तायं तदभावादवेदकः॥ ४ ॥

सं० टी—अस्य चितः चिद्रूपस्य, भोक्तृत्वं कर्मफलभोक्तृत्वं, न स्वभावः, न स्वरूपं स्मृतः-कथितः, अज्ञानादेव- परात्मनोरेकत्वाध्यासकरणलक्षणादनवबोधादेव, अयं-चेतयिता, भोक्ता-कर्मफलानुभोजकः, तदभावात्-प्रतिनियतस्वलक्षणनिर्ज्ञानात्, अवेदकः-कर्मफलानभोजकः ॥ ४ ॥ अथ ज्ञान्यज्ञानाभिस्वरूपं सूत्रयति—

अर्थ—इस आत्माका कर्तास्वभाव जैसै नाही है, तैसेही भोक्तापणा भी स्वभाव नाही है, यह अज्ञानहीतैं भोक्ता होय है ॥ बहुरि जब अज्ञानका अभाव होय है तब अवेदक है, भोक्ता नाही है ॥

अज्ञानी प्रकृतिस्वभावनिरतो नित्यं भवेद्वेदको
ज्ञानी तु प्रकृतिस्वभावविरतो नो जातुचिद्वेदकः ।
इत्येवं नियमं निरूप्य निपुणैरज्ञानिता त्यज्यतां
शुद्धैकात्ममये महस्यचलितैरासेव्यतां ज्ञानिता ॥ ५ ॥

सं टी –अज्ञानी पुमान्,प्रेत्यादिः-प्रकृतेः कर्मणः, स्वभाव -स्वरूपं, तत्र निरतः-निःशेषं रक्तः सन्, शुद्धात्मज्ञानाभावात् स्वपरयोरेकत्वज्ञानेन तयोरेकत्वदर्शनेन तयोरेकत्वपरिणत्या च प्रकृतिस्वभावे स्थितत्वात् प्रकृतिस्वभावमपि अहंतयानुभवन्, नित्यं वेदकः-कर्मफलभोक्ता भवेत्, तु पुनः, ज्ञानी पुमान् प्रेत्यादिः-प्रकृतेः-स्वभावात् विरतः-विरक्त सन् शुद्धात्मज्ञानसद्भावात्स्वपरयोर्विभागज्ञानेन तयोर्विभागदर्शनेन तयोर्विभागपरिणत्या च प्रकृतिस्वभावादपसृतत्वात् शुद्धात्मस्वभावमेकमेवाहंतयानुभवन्, जातुचित् कदाचिदपि, न वेदकः-उदितकर्मफलभोक्ता न, निपुणैः भेदज्ञैः पुरुषैः, अज्ञानिता-अज्ञानस्वभावः, त्यज्यता-मुच्यता, किंकृत्वा ? इति-अमुना प्रकारेण, एवं पूर्वोक्तं ज्ञान्यज्ञानिनोर्वंधावंधलक्षणं नियमं निरूप्य-ज्ञात्वा, पुनः आसेव्यतां ध्यायतां, का ? ज्ञानिता ज्ञानित्वं, कैः ? अचलितैः-अचलत्वं प्राप्तैः, क ? महसि-तेजसि, किंभूते ? शुद्धैकात्ममये-शुद्धः निष्कलंकः स चासौ एकात्मा च तेन निर्वृत्तस्तस्मिन् ॥ ५ ॥ अथ ज्ञानिनो ज्ञातृत्वमध्यापयति—

अर्थ–अज्ञानी जन हैं सो तौ प्रकृतिस्वभावविषै रागी हैं-लीन हैं, ताहीकूं अपना स्वभाव जानै हैं, तातैं सदाकाल ताका वेदक हैं–भोक्ता हैं ॥ वहुरि ज्ञानी है सो प्रकृतिस्वभावविषैं विरागी है–विरक्त है, ताकूं परका स्वभाव जानै है तातैं कदाचित्भी वेदक नाही है-भोक्ता नाही है ॥ सो आचार्य उपदेश करै हैं-जो, जे निपुण प्रवीण पुरुष हैं, ते ज्ञानीपणाका अर अज्ञानीपणाका ऐसा नियम निरूपणकरि विचारिकरि अज्ञानीपणाकूं तौ छोडौ अर शुद्ध आत्मामय जो एक मह-तेज प्रताप, ताविषै निश्चल होयकरि ज्ञानीपणाकूं सेवन करौ ॥

ज्ञानी करोति न न वेदयते च कर्म जानाति केवलमयं किल तत्स्वभावं ।
जानन्परं करणवेदनयोरभावाच्छुद्धस्वभावनियतः स हि मुक्त एव ॥ ६ ॥

सं० टी०—ज्ञानी-पुमान् शुभाशुभं कर्म न करोति-न विधत्ते, न वेदयते-कर्ममलं न भुंजति, किलेति निश्चितं, अयं-ज्ञानी, के-

वलं कर्तृत्वभोक्तृत्वराहित्येन पर, तत्स्वभावं तस्य कर्मणः स्वभावं स्वरूपं मधुरकटुकादि जानाति तत्स्वभावपरिच्छेदको भवति हि पुनः सः-आत्मा, मुक्त एव-कर्मफलरहित एव, पर-केवलं, जानन् विश्वं परिच्छिदन् सन्, शुद्धेत्यादि, शुद्धश्चासौ स्वभाव-स्वरूपं च, तत्र नियतः-निश्चलत्वमापन्नः, कुतः ? करणवेदनयोः करणं कर्मकर्तृत्वं च, वेदनं कर्मफलभोक्तृत्वं च तयोरभावात् कर्तृत्वभोक्तृत्वस्वभावराहित्यात् ॥ ६ ॥ अथात्मनः कर्तृत्व दूषयति—

अर्थ—ज्ञानी है सो कर्मकूं स्वतंत्र होय करै नाही है। तैसेही वेदै नाही है। केवल तिस कर्मस्वभावकूं जानैही है ॥ ऐसैं केवल जानता संता करनेका अर वेदनेका अभावतै शुद्धस्वभावके विषै निश्चल है सो निश्चयकरि मुक्तही है-कर्मनितै छुट्याही कहिये ॥ भावार्थ—ज्ञानी कर्मका स्वाधीनपणै कर्ता भोक्ता नाही, केवल ज्ञाताही है। तातै शुद्धस्वभावरूप भया संता मुक्तही है। जो कर्म उदय आवै भी है तौ ज्ञानीका कहा करै ? जेतै निबलाई रहै जेतै कर्म जोर चलावो सबलाई-क्रमतै बधाय कर्मका निर्मूल नाश करेहीगा ॥

## ये तु कर्तारमात्मानं पश्यंति तमसावृताः ।
## सामान्यजनवत्तेषां न मोक्षोऽपि मुमुक्षतां ॥ ७ ॥

सं० टी०—ये तु जिनसिद्धांताभासाः, तमसावृता- अज्ञानव्याप्ताः, विचारराहित्यात्, आत्मानं, कर्तारं-कर्मकारकं, पश्यंति ईक्षंते, तेषां-जैनाभासानां, मुमुक्षतामपि, मोक्षमिच्छतामपि न मोक्षः-कर्ममोचनलक्षणो मोक्षो न स्यात् आत्मनः कर्तृत्वाभ्युपगमात् तदभ्युपगमे च सदैव बद्धत्वप्रसंग- क इव सामान्यजनवत् सामान्यजनानां-वैशेषिकादीनां यथा 'कर्ता शिवस्त्रिजगता' तथा च प्रयोग-सर्वं उर्वीपर्वततरुतन्वादिकं धीमद्धेतुकं कार्यत्वात् अचेतनोपादानत्वात् सन्निवेशविशिष्टत्वात् वा वस्त्रादिवदिति यस्तु धीमान् स ईश्वर-। तस्य विचार्यमाणस्य मुक्तत्वायोगात् स हि-अशरीरः सशरीरो वा करोति ? न तावदाद्य अशरीरस्य कर्तृत्वव्याघातात् मुक्तात्मवत्। सशरीरत्वे शरीरमात्रकर्तृत्वे उपक्षीणशक्तिकत्वात् तदकारणे साधनस्य व्यभिचारात्, सकर्मकत्वे संसारिजनवदकर्तृकत्वाच्च तद्वदमुक्तत्वं ॥ ७ ॥ अथ तथैव कर्तृत्वं व्याहंति—

अर्थ—जे पुरुप अज्ञान अंधकारकरि आच्छादे हुये आत्माकूं कर्ता मानैं हैं, ते मोक्षकूं चाहते हैं, तौऊ तिनिकै सामान्यजन—लौकिकजनकीज्यौं मोक्ष नाही होय है ॥

विशेप—वैशेपिक आदि ईश्वरको जगतका कर्ता मानते है । इश्वर कर्ता है इसबातकी सिद्धिके लिये वे यह अनुमानभी

अज्ञानी प्रकृतिस्वभावनिरतो नित्यं भवेद्वेदको
ज्ञानी तु प्रकृतिस्वभावविरतो नो जातुचिद्वेदकः ।
इत्येवं नियमं निरूप्य निपुणैरज्ञानिता त्यज्यतां
शुद्धैकात्ममये महस्यचलितैरासेव्यतां ज्ञानिता ॥ ५ ॥

सं टी –अज्ञानी-पुमान्,प्रेत्यादिः-प्रकृतेः कर्मणः, स्वभाव-स्वरूपं, तत्र निरतः-निःशेषं रक्तः सन्, शुद्धात्मज्ञानाभावात् स्वपरयोरेकत्वज्ञानेन तयोरेकत्वदर्शनेन तयोरेकत्वपरिणत्या च प्रकृतिस्वभावे स्थितत्वात् प्रकृतिस्वभावमपि अहंतयानुभवन्, नित्यं वेदकः-कर्मफलभोक्ता भवेत्, तु-पुनः, ज्ञानी पुमान् प्रेत्यादिः-प्रकृतेः-स्वभावात् विरत-विरक्त सन् शुद्धात्मज्ञानसद्भावात्स्वपरयोर्विभागज्ञानेन तयोर्विभागदर्शनेन तयोर्विभागपरिणत्या च प्रकृतिस्वभावादपसृतत्वात् शुद्धात्मस्वभावमेकमेवाहंतयानुभवन्, जातुचित् कदाचिदपि, न वेदकः-उदितकर्मफलभोक्ता न, निपुणैः भेदज्ञैः पुरुषैः, अज्ञानिता-अज्ञानस्वभावः, त्यज्यता-मुच्यतां, किंकृत्वा? इति-अमुना प्रकारेण, एवं-पूर्वोक्तं ज्ञान्यज्ञानिनोर्बंधाबंधलक्षणं नियमं निरूप्य-ज्ञात्वा, पुनः आसेव्यतां ध्यायता, का? ज्ञानिता ज्ञानित्वं, कैः? अचलितैः-अचलत्वं प्राप्तै, क? महसि-तेजसि, किंभूते? शुद्धैकात्ममये-शुद्धः निष्कलंकः स चासौ एकात्मा च तेन निर्वृत्तस्तस्मिन् ॥ ५ ॥ अथ ज्ञानिनो ज्ञातृत्वमध्यापयति—

अर्थ—अज्ञानी जन हैं सो तौ प्रकृतिस्वभावविषै रागी हैं-लीन हैं, ताहीकूं अपना स्वभाव जानै हैं, तातैं सदाकाल ताका वेदक हैं—भोक्ता हैं ॥ बहुरि ज्ञानी है सो प्रकृतिस्वभावविषैं विरागी है—विरक्त है, ताकूं परका स्वभाव जानै है तातैं कदाचित्भी वेदक नाही है-भोक्ता नाही है ॥ सो आचार्य उपदेश करै हैं-जो, जे निपुण प्रवीण पुरुष हैं, ते ज्ञानीपणाका अर अज्ञानीपणाका ऐसा नियम निरूपणकरि विचारिकरि अज्ञानीपणाकूं तौ छोडौ अर शुद्ध आत्मामय जो एक मह-तेज प्रताप, ताविषै निश्चल होयकरि ज्ञानीपणाकूं सेवन करौ ॥

ज्ञानी करोति न न वेदयते च कर्म जानाति केवलमयं किल तत्स्वभावं ।
जानन्परं करणवेदनयोरभावाच्छुद्धस्वभावनियतः स हि मुक्त एव ॥ ६ ॥

सं० टी०—ज्ञानी पुमान् शुभाशुभं कर्म न करोति-न विधत्ते, न वेदयते-कर्ममलं न भुंजति, किलेति निश्चितं, अयं-ज्ञानी, के-

वलं कर्तृत्वभोक्तृत्वराहित्येन पर, तत्स्वभावं तस्य कर्मणः स्वभावं स्वरूपं मधुरकटुकादि जानाति तत्स्वभावपरिच्छेदको भवति हि पुनः सः-आत्मा, मुक्त एव कर्मफलरहित एव, परं केवलं, जानन् विश्वं परिच्छिदन् सन्, शुद्धेत्यादिः, शुद्धश्चासौ स्वभाव-स्वरूपं च, तत्र नियतः-निश्चलत्वमापन्नः, कुतः ? करणवेदनयोः करणं कर्मकर्तृत्वं च, वेदनं कर्मफलभोक्तृत्वं च तयोरभावात् कर्तृत्वभोक्तृत्वस्वभावराहित्यात् ॥ ६ ॥ अथात्मनः कर्तृत्वं दूषयति—

अर्थ–ज्ञानी है सो कर्मकूं स्वतंत्र होय करै नाही है । तैसेही वेदै नाही है । केवल तिस कर्मस्वभावकूं जानैही है ॥ ऐसै केवल जानता संता करनेका अर वेदनेका अभावतै शुद्धस्वभावके विषै निश्चल है सो निश्चयकरि मुक्तही है-कर्मनितै छुट्याही कहिये ॥ भावार्थ–ज्ञानी कर्मका स्वाधीनपणै कर्ता भोक्ता नाही, केवल ज्ञाताही है । तातै शुद्धस्वभावरूप भया संता मुक्तही है । जो कर्म उदय आवै भी है तौ ज्ञानीका कहा करै ? जेतै निवलाई रहै जेतै कर्म जोर वलावो सवलाई-क्रमतै वधाय कर्मका निर्मूल नाश करेहीगा ॥

## ये तु कर्तारमात्मानं पश्यंति तमसावृताः ।
## सामान्यजनवत्तेषां न मोक्षोऽपि मुमुक्षतां ॥ ७ ॥

सं० टी०—ये तु-जिनसिद्धांताभासाः, तमसावृताः अज्ञानव्याप्ताः, विचारराहित्यात्, आत्मानं, कर्तारं-कर्मकारकं, पश्यंति ईक्षंते, तेषां-जैनाभासानां, मुमुक्षतामपि, मोक्षमिच्छतामपि न मोक्षः-कर्ममोचनलक्षणो मोक्षो न स्यात् आत्मनः कर्तृत्वाभ्युपगमात् तदभ्युपगमे च सदैव बद्धत्वप्रसंगः क इव सामान्यजनवत् सामान्यजनानां-वैशेषिकादीनां यथा 'कर्ता शिवस्त्रिजगता' तथा च प्रयोगः सर्वं उर्वीपर्वततरुतन्वादिकं धीमद्धेतुकं कार्यत्वात् अचेतनोपादानत्वात् सन्निवेशविशिष्टत्वात् वा वस्त्रादिवदिति यस्तु धीमान् स ईश्वरः । तस्य विचार्यमाणस्य मुक्तत्वायोगात् स हि-अशरीरः सशरीरो वा करोति ? न तावदाद्यः अशरीरस्य कर्तृत्वव्याघातात् मुक्तात्मवत् । सशरीरत्वे शरीरमात्रकर्तृत्वे उपक्षीणशक्तिकत्वात् तदकारणे साधनस्य व्यभिचारात्, सकर्मकत्वे संसारिजनवदकर्तृकत्वाच्च तद्वदमुक्तत्वं ॥ ७ ॥ अथ तथैव कर्तृत्वं व्याहंति—

अर्थ–जे पुरुष अज्ञान अंधकारकरि आच्छादे हुये आत्माकूं कर्ता मानै हैं, ते मोक्षकूं चाहते हैं, तौऊ तिनिकै सामान्यजन–लौकिकजनकीज्यौं मोक्ष नाही होय है ॥

विशेष–वैशेषिक आदि ईश्वरको जगतका कर्ता मानते है । इश्वर कर्ता है इसवातकी सिद्धिके लिये वे यह अनुमानभी

वतलाते हैं—कि जिसप्रकार वस्त्र कार्य है उसके उपादान कारण तंतु अचेतन है और उसकी विलक्षण रचना है इसलिये उसका कर्ता निश्चित है उसीप्रकार पृथ्वी पर्वत वृक्ष और शरीर आदि पदार्थ भी कार्य हैं इनके भी उपादान कारण अचेतन है और ये विलक्षण रचनाके धारक है इसलिये इनका भी कोई शक्तिमान विद्वान कर्ता होना चाहिये और जो वह कर्ता है वही ईश्वर है। परतु जिससमय इस कर्ताके सिद्ध करनेवाले अनुमानपर विचार किया जाता है उससमय वह ईश्वर, मुक्त--समस्त कर्मवासनाओंसे रहित अनुभवमें नहिं आता क्योंकि यहापर दो विकल्प आकर खडे होते हैं—वह पृथ्वी आदिको बनानेवाला शरीरसहित है किं वा रहित ? यदि शरीररहित मानाजायगा तो झूठ है क्योंकि जिसप्रकार सिद्धात्मा शरीररहित है इसलिये वे कर्ता भी नहीं, उसीप्रकार यदि ईश्वर शरीररहित होगा तो कभी कर्ता नहिं हो सकता। यदि उसै कर्ता माननेके लिये उसका शरीर मानोगे तो वहापर भी दो विकल्प उठते है कि वह केवल शरीरको ही बनाता है वा अन्यपदार्थोंको भी ? यदि केवल शरीरका ही बनानेवाला है तो उसकी समस्त शक्तितो उसीमें क्षीण हो जायगी फिर वह बनावेगा क्या ? और ऐसा करनेसे कार्यत्व आदि हेतु भी दुष्ट हो जायेगा--क्योंकि तुम्हारी व्याप्ति तो यह है कि जितने कार्य है उनका कोई न कोई कर्ता अवश्य है सो कार्य तो पृथ्वी आदि भी है उनका कोई कर्ता निश्चित न हुआ। कहोगे कि वह शरीरसहित ईश्वर शरीर आदि सबका कर्ता है तो जिसप्रकार ईश्वरसे इतर शरीरधारी ससारी सब कार्योंके कर्ता नहिं हो सकते उसीप्रकार उनके समान ईश्वर भी कर्ता न ठहरेगा तथा ससारी जीवोंके समान वह भी मुक्त न हो सकेगा इसलिये किसीभी आत्माका कर्ता न मानना यही पक्ष समीचीन है ॥ ७ ॥

**नास्ति सर्वोऽपि संबंधः परद्रव्यात्मतत्त्वयोः ।**
**कर्तृकर्मत्वसंबधाभावे तत्कर्तृता कुतः ॥ ८ ॥**

सं० टी०—परेत्यादिः-पुद्गलद्रव्यजीवद्रव्ययोः सर्वोऽपि-तादात्म्यादिलक्षणः संबंधः, नास्ति, कर्त्रेत्यादिः-तयोर्मध्ये आत्मनः कर्तृत्वं, कर्मणां कर्मत्वं, एतल्लक्षणसंबंधाभावे सति, तत्कर्तृता तेषां कर्मणामात्मनः कर्तृत्वं कुतः ? न कुतोऽपि स्यात् ॥ ८ ॥
अथ परद्रव्यात्मतत्त्वयोः संबंधं निवारयति—

अर्थ—परद्रव्यका अर आत्मतत्त्वका सर्वही संबंध नाही है, ऐसें कर्त्ताकर्मपणाका संबधका अभावकूं होतै परद्रव्यका कर्तापणा काहेतैं होय ? भावार्थ--परद्रव्यका अर आत्माका किछूमी संबंध नाही, तब कर्त्ताकर्मसंबंध काहेकूं होय ?

